शालीकङ्गुश्यामाकतिलसर्षपमुद्गमाषनिष्पावाः ।
खल्वाढ़किसमेता वीजानि विदुः प्ररोहयोग्यानि ॥ २२ ॥
प्रक्षाल्य तानि निवपेदभिमन्त्र्य मूलवीजेन साधकवरस्त्वथ पात्रकेषु ।
विप्राशिषा च विधिवत् प्रतिवाद्यमानशङ्खादिमुख्यतरपञ्चमहास्वनैश्च ॥ २३ ॥
हारिद्राद्भिः सम्यगभ्युक्ष्य वस्त्रैराच्छाद्याद्भिः सिच्यताम्पञ्चघोषैः ।
सायंप्रातःशर्व्वरीषु प्रदद्यादुक्तैर्द्रव्यैस्तद्बलीन् साधकेशः ॥ २४ ॥
भूतपितृयक्षनागब्रह्मशिवा देवताश्च विष्ण्वन्ताः ।
ताभ्यः क्रमेण रात्रिषु सप्तसु नवसु वा तद्बलिर्देयः ॥ २५ ॥
लाजतिलरक्तरजोदधिशक्त्वन्नानि भूतक्रूराख्यम् ।
पैत्रं तिलतण्डुलकं सोडुम्बरिकधानलाजकं याक्षम् ॥ २६ ॥
क्षैरोदशक्तुपिष्टं नागं पद्माक्षतश्च वैरिञ्चम् ।
अन्नापूपं शैवं गुड़ौदनं वैष्णवं च दौग्धान्नम् ॥ २७ ॥
कृशरश्च वैष्णवेयं यदि नवरात्रं क्रमेण बलिरुक्तः ।
तारादिकैर्नमोऽन्तैः स्वैः स्वैरपि नामभिश्च बलिमन्त्रः ॥ २८ ॥
पात्राणि विविधान्यपि (१) परितः पुनरष्टदिक्षु बलिक्लृप्तिः ।
वीजारोपणकर्म्म प्रथितमिदं सार्व्वकामिकं भवति ॥ २९ ॥
प्रागेव लक्षणयुतानि च मण्डपेऽस्मिन्
कुण्डानि कारयतु सम्यगथो दिशासु ।
आखण्डलार्कसुतवारिधनाधिपानां
दोर्मात्रकाणि विलसद्गुणमेखलानि ॥ ३० ॥
चतुरस्रमर्द्धशशिबिम्बविलसितमथ त्रिकोणकम् ।
पद्मदलरुचिरवृत्तमिति ब्रुवते बुधा विधिषु कुण्डलक्षणम् ॥ ३१ ॥
विंशत्या चतुरधिकाभिरङ्गुलीभिः सूत्रेणाप्यथ परिसूत्र्य भूमिभागम् ।
ताभिश्च प्रखनतु तावतीभिरेकां त्यक्त्वा चाङ्गुलिमपि मेखलाश्च कार्य्याः ॥ ३२ ॥

---

(१) "त्रिविधान्यपि" इति वा पाठः ।

सत्त्वपूर्व्वकगुणान्विताः क्रमात् द्वादशाष्टचतुरङ्गुलोच्छ्रिताः ।
सर्व्वतोऽङ्गुलिचतुष्कविस्तृता मेखलाः सकलसिद्धिदा मताः ॥ ३३ ॥
योनिस्तत्पश्चिमायामथ दिशि चतुरस्रस्थलारब्धनाला
तन्मध्योन्नासिरन्ध्रोपरिबहुविततास्वत्थपत्रानुकारा ।
उत्सेधायामकाभ्यां प्रकृतिविकृतिसंज्ञाङ्गुलोष्टाङ्गुला स्या-
द्विस्तृत्या द्वादशार्द्धाङ्गुलमितनमिताग्रा निविष्टैव कुण्डे ॥ ३४ ॥
अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेव ।
गदितैरपि लक्षणैः समेतापघनं दृष्टिमनोहरञ्च कान्त्या ॥ ३५ ॥

ततो मण्डपमध्ये तु स्थण्डिलं गोमयाम्बुना ।
उपलिप्य यथान्यायं तस्य मध्ये निधापयेत् ॥ ३६ ॥
सूत्रं प्राक् प्रत्यगन्ताग्रं विप्राशीर्व्वचनैः सह ।
गुणितेनाभितो मत्स्यौ मध्यादारभ्य विन्यसेत् ॥ ३७ ॥
तन्मध्यस्थितयाम्योदगग्रं सूत्रं निधापयेत् ।
ततो मध्यात् सपादहस्तमानेषु च दिशम्प्रति ॥ ३८ ॥
सूत्रेषु मकरान्मत्स्यान् (१) सष्टानन्योन्यतः समान् ।
सूत्राग्रमकरेभ्यस्तु न्यसेत् कोणेषु मत्स्यकान् ॥ ३९ ॥
कोणमत्स्यस्थिताग्राणि दिक्षु सूत्राणि पातयेत् ।
ततो भवेच्चतुष्कोष्ठं चतुरस्रञ्च मण्डलम् ॥ ४० ॥
तत्राग्निमारुतं सूत्रं नैर्ऋतैशञ्च पातयेत् ।
प्रागयाम्यवारुणोदीच्यसूत्राग्रमकरेषु च ॥ ४१ ॥
निहिताग्रयुगं सूत्रचतुष्कं प्रतिपादयेत् ।
कृते एवं भवेयुस्ते कोणकोष्ठेषु (२) मत्स्यकाः ॥ ४२ ॥
तेषु प्राग्वारुणांस्तन्तून् याम्योदीच्यान्निपातयेत् ।
षट्पञ्चाशत्पदानि स्युरधिकानि शतद्वयात् ॥ ४३ ॥

---

(१) "मकरान्नरसेत्" इति वा पाठः । (२) "कोणकोणेषु" इति वा पाठः ।

यदा तदाथो विभजेत् पदानि क्रमशः सुधीः ।
पदैः षोड़शभिर्मध्ये पद्मं वृत्तत्रयान्वितम् ॥ ४४ ॥
अष्टचत्वारिंशता तैराशिः स्याद्वीथ्यशीतिभिः ।
सद्वादशैः शतपदैः शोभायुग्द्वारकोणकम् ॥ ४५ ॥
द्वाराणि पदषट्कानि शोभाख्याः स्युश्चतुष्पदाः ।
चतुष्पदाश्चोपशोभाः षट्पदं कोणकम्भवेत् ॥ ४६ ॥
वृत्तवीथ्योराराचयेन्मध्ये सूत्रचतुष्टयम् ।
प्राग्याम्यवारुणोदीच्यं भवेत्तद्राशिमण्डलम् ॥ ४७ ॥
कर्णिकायाः केसराणां दलसन्धेर्दलस्य च ।
दलाग्रवृत्तराशीनां वीथ्याः शोभोपशोभयोः ॥ ४८ ॥
वृत्तानि चतुरस्राणि व्यक्तं स्थानानि कल्पयेत् ।
भवेन्मण्डलमध्यार्द्धे कर्णिका चतुरङ्गुला ॥ ४९ ॥
द्व्यङ्गुलाः केसराश्च स्युः सन्धिश्च चतुरङ्गुलः ।
तथा दलानां मानन्तदग्रं द्व्यङ्गुलकं भवेत् ॥ ५० ॥
अन्तरालं पृथग्वृत्तत्रये द्व्यङ्गुलमुच्यते ।
ततश्च राशिचक्रं स्यात् स्वस्ववर्णविभूषितम् ॥ ५१ ॥
राशिमङ्गुलकैः कुर्य्यात् षड्भिर्नवभि(१)रेव वा ।
द्वात्रिंशदङ्गुलं ह्येतत् परस्तात्तावदिष्यते ॥ ५२ ॥
वृत्तं चक्रमुशन्त्येके चतुरस्रञ्च तद्विदः ।
यदि वा वर्त्तुलमराः स्युश्च द्वादश राशयः ॥ ५३ ॥
ते स्युः पिपीलिकामध्या मातुलुङ्गनिभा अपि ।
चक्रं वा चतुरस्रं चेत् त्र्यस्रा द्वादश राशयः ॥ ५४ ॥
भवेयुः पङ्कजदलनिभा वा कथिता बुधैः ।
तद्वहीरुचिरान् कुर्य्यात् चतुरः कल्पशाखिनः ॥ ५५ ॥

---

(१) षड्भिर्नवभिरेव वेति वाकारश्चार्थे षड़ङ्गुलं नवाङ्गुलञ्चेत्यर्थः । तथाच पञ्चदशाङ्गुलमिति यावत् ।

ललितान् रूढ़कुसुमान् फलपल्लवशोभितान् ।
जलजैः स्थलजैर्वापि सुमनोभिः समन्वितान् ॥ ५६ ॥
हंससारसकारण्डशुकभ्रमरकोकिलैः ।
मयूरचक्रवाकाद्यैरारूढ़विटपान्नतान् ॥ ५७ ॥
सर्व्वर्त्तुनिर्वृतिकरान् विलोचनमनोहरान् ।
तद्बहिः पार्थिवं कुर्य्यान्मण्डलं कृष्णकोणकम् ॥ ५८ ॥
मण्डलानि तु तत्त्वज्ञो राश्यन्तान्येव कारयेत् ।
राशावन्यत्र रचयेत् प्रमोहादन्यमण्डलम् ॥ ५९ ॥
आवाह्य देवतामन्यामर्च्चयंस्त्वन्यदेवताम् ।
उभाभ्यां लभते शापं मन्त्री तरलदुर्म्मतिः ॥ ६० ॥
कालात्मकस्य देवस्य राशिर्व्यक्ति(१)मजानता ।
कृतं समस्तं व्यर्थं स्यादज्ञेन ज्ञानमानिना ॥ ६१ ॥
तस्मात् सर्व्वप्रयत्नेन राशीन् साधिपतीन् क्रमात् ।
अवगम्यानुरूपाणि मण्डलानि च नान्यधीः ॥ ६२ ॥
उपक्रमेदर्च्चयितुं होतुं वा सर्व्वदेवताः ।
रजांसि पञ्चवर्णानि पञ्चद्रव्यात्मकानि च ॥ ६३ ॥
पीतशुक्लारुणसितश्यामान्येतानि भूतशः ।
हारिद्रं स्याद्रजः पीतं ताण्डुलञ्च सितं भवेत् ॥ ६४ ॥
तथा दोषारजःचारसंयुक्तं रक्तमुच्यते ।
कृष्णं दग्धपुलाकोत्थं श्यामं विल्वदलादिकम् ॥ ६५ ॥
सितेन रजसा कार्य्याः सीमारेखा विपश्चिता ।
अङ्गुलोत्सेधविस्ताराः सर्व्वा मण्डलकर्म्मसु ॥ ६६ ॥
पीता स्यात् कर्णिका शुक्लपीतरक्ताश्च केसराः ।
दलान्यच्छान्यन्तरालं श्यामचूर्णेन पूरयेत् ॥ ६७ ॥

(१) "राशिर्व्याप्तिम्" इति वा पाठः ।

सितरक्तासितैर्व्वर्णैर्वृत्तत्रयमुदीरितम् ।
नानावर्णविचित्राः स्वस्तिकाकाराश्च वीथयः ॥ ६८ ॥
द्वारशोभोपशोभास्राः सितरक्तनिशासिताः ।
राशिचक्रावशिष्टानि कोणान्यस्त्रिषु यानि वै ।
पीठपादानि तानि स्युररुणान्यसितानि च ॥ ६९ ॥
अथवारुणानि दलानि च तथादलसन्धिरप्यसितरुग्भवति ।
असितारुणाच्छरजसा विहितान्यपि वर्त्तुलानि कथयन्त्यपरे ॥ ७० ॥

॥ * ॥ इति श्रीप्रपञ्चसारे पञ्चमः पटलः ॥ * ॥

---

## षष्ठः पटलः ।

अथ पुनराचम्य गुरुः प्राग्वदनो विष्टरोपविष्टः सन् ।
प्राणायामं सलिपिन्यासं कृत्वा न्यसेत्तदृष्यादीन् ॥ १ ॥
ऋषिर्गुरुत्वाच्छिरसैव धार्य्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियावगन्तव्यतया सदैव हृदि प्रदिष्टा मनुदेवता च ॥ २ ॥
ऋषिर्व्वर्णादिकौ धातू स्तो गत्या प्रापणेन च ।
यात्याभ्यां यत्स्वरूपं स गुरुः स्यादृषिवाचकः ॥ ३ ॥
इच्छादानार्थकौ धातू स्तः छाद्योऽन्यश्च दादिकः ।
तयोरिच्छां ददातीति छन्दो मन्त्रार्णवाचकम् ॥ ४ ॥
आत्मनो देवताभावप्रदानाद्देवतेति च ।
पदं समस्ततन्त्रेषु विद्वद्भिः समुदीरितम् ॥ ५ ॥
हृदयशिरसोः शिखायां कवचाद्यस्त्रेषु सहचतुर्थीषु !
नत्या हुत्या च वषट् हुं वौषट् फट्पदैः षड़ङ्गविधिः ॥ ६ ॥
हृदयं बुद्धिगम्यत्वात्प्रणामः स्यान्नमः पदम् ।
क्रियते हृदयेनातो बुद्धिगम्या नमस्क्रिया ॥ ७ ॥
तुङ्गार्थत्वाच्छिरः स्वे स्वे विषयाहरणे स्थितः ।
शिरोमन्त्रेण चोत्तुङ्गविषयाहृतिरीरिता ॥ ८ ॥
शिखा तेजः समुद्दिष्टा वषड़ित्यङ्गमुच्यते ।
तत्तेजोऽस्य तनुः प्रोक्ता शिखामन्त्रेण मन्त्रिणः ॥ ९ ॥
कवग्रहण इत्यस्माद्धातोः कवचसम्भवः ।
हुन्तेजस्तेजसा देहो गृह्यते कवचन्ततः ॥ १० ॥
नेत्रं दृष्टिः समुद्दिष्टा वौषड़्दर्शनमुच्यते ।
दर्शनं दृशि येन स्यात्तत्तेजो नेत्रवाचकम् ॥ ११ ॥

अस्त्र सादिको धातू स्तः क्षेपचलनार्थको।
ताभ्यामनिष्टमाक्षिप्य चालयेत् फट् पदाग्निना ॥ १२ ॥
अङ्गमन्त्रा इमे प्रोक्ताः सर्व्वतन्त्रेषु सूरिभिः।
पञ्चैव यस्य मन्त्रस्य भवन्त्यङ्गानि मन्त्रिणाम् ॥ १३ ॥
सर्व्वेष्वपि च मन्त्रेषु नेत्रलोपो विधीयते।
अङ्गुलीषु क्रमादङ्गैरङ्गुष्ठादिषु विन्यसेत् ॥ १४ ॥
कनिष्ठान्तासु तद्वाह्यतलयोः करयोः सुधीः।
अस्त्रेण तालत्रितयं कृत्वा तेनैव बन्धयेत् ॥ १५ ॥
दिशो दशक्रमादङ्गषट्कं वा पञ्चकं न्यसेत्।
जपारम्भे मनूनान्तु सामान्येयं प्रकल्पना ॥ १६ ॥
शङ्खं सगन्धपुष्पाक्षततोयं वामतः प्रविन्यस्य।
साङ्गं मन्त्रं पूजामूर्त्तौ (१) न्यसेद्गुरूपदेशेन ॥ १७ ॥
न्यसेच्च दक्षभागे सुमनः पात्रं तथाऽभितो दीपान्।
अन्यत्साधनमखिलं पुरतो गन्धाक्षतादिकं मन्त्री ॥ १८ ॥
प्रथमं निजसव्यतो यथावत्प्रयजेद्देवमयान् महागुरून् स्वान्।
गणनायकमन्यतश्च पाशाङ्कुशदन्ताभयहस्तमुज्ज्वलाङ्गम् ॥ १९ ॥
रक्तं धर्म्मं वृषतनुमथाग्नौ हरिं श्यामवर्णं
ज्ञानं रक्षोदिशि मरुति पीतञ्च वैराग्यसंज्ञम्।
भूताकारं द्विरदतनुमैश्वर्य्यमीशे च कृष्णं
नञ्पूर्व्वैस्तैर्यजतु दिशि चित्राणि गात्राणि पीठे ॥ २० ॥
मध्येऽनन्तं पद्ममस्मिंश्च सूर्य्यं सोमं वह्निं तारवर्णैर्व्विभक्तैः।
सत्त्वादींश्च त्रीन् गुणानात्मयुक्तान् शक्तीः किञ्जल्केषु मध्ये यजेच्च॥२१॥
श्वेताकृष्णारक्तापीताश्यामानलोपमाः प्रोक्ताः।
अञ्जनजपासमानवर्णास्तेजोरूपाश्च शक्तयः प्रोक्ताः ॥ २२ ॥

(१) "पूजामूर्त्तेः" इति पाठान्तरम्।

विन्यस्य कर्णिकोपरि शालीस्तदुपरि तण्डुलांश्च तथा ।
तेषामुपरि च दर्भान् दर्भोपरि कूर्चमक्षतोपेतम् ॥ २३ ॥
त्रिगुणेन च तन्तुरूपभाजा परितोऽथोपरिवेष्टितं यथावत् ।
लघुनालघुधूपितञ्च कूर्चोपरि कुम्भं निदधातु तारजापी ॥ २४ ॥
न्यस्य दर्भमयकूर्चमक्षताद्यन्वितं सनवरत्नकं (१) घटे ।
पूरयेत् सह कषादिकान्तगैरक्षरौषधिविपाचितैर्जलैः ॥ २५ ॥
अथवा दशमूलपुष्पदुग्धाङ्घ्रिपचर्म्मोत्क्वथितैः कषायतोयैः ।
स्तनज (२) द्रुमचर्म्मसाधितैर्वा सलिलैः संयतधीः शुभोदकैर्वा ॥२६॥
शङ्के कषायोदकपूरिते च विलोड्य सम्यग्विधिनाष्टगन्धम् ।
कलाः समावाह्य विनिक्षिपेत्तत्क्वाथोदकापूर्णमुखे च कुम्भे ॥२७॥
त्रिविधं गन्धाष्टकमपि शाक्तेयं वैष्णवञ्च शैवमपि ।
गन्धाष्टकेन शक्तिः स्यात् क्रमशो मन्त्रिणाकृतेऽनन्ता ॥ २८ ॥
चन्दनकर्पूरागुरुकुङ्कुमकपिमांसिरोचनाचोराः ।
गन्धाष्टकमपि शक्तेः सान्निध्यकरञ्च लोकरञ्जनकृत् ॥ २९ ॥
चन्दनह्रीवेरागुरुकुष्ठासृग्गुशीरमांसिमुरमपरम् ।
चन्दनकर्पूरागुरुदलरुधिरकुशीतरोगजमपरम् ॥ ३० ॥
अष्टत्रिंशत्प्रभेदेन याः कलाः प्रागुदीरिताः ।
गुरूपदेशक्रमतस्ता विद्वान् विनियोजयेत् ॥ ३१ ॥
याः पञ्चाशत्कलास्तारपञ्चभेदसमुत्थिताः ।
पञ्च पञ्चकसम्भिन्ना विदुस्तास्तत्त्ववेदिनः ॥ ३२ ॥
सप्तात्मकस्य तारस्य परौ द्वौ तु परौ यतः ।
ततस्तु शक्तिशान्ताख्यौ पठ्येते न परैः सह ॥ ३२ ॥
प्रथमं प्रकृतेर्हंसः प्रतद्विष्णुरनन्तरः ।
त्रैयम्बकं तृतीयं स्यात् चतुर्थस्तत्पदादिकः ॥ ३४ ॥

(१) "सनवरत्नकम्" इति पाठान्तरम् । (२) "स्थलज" इति पाठान्तरम् ।

विष्णुर्योनिरितीत्यादिः पञ्चमः कल्पतां मनुः ।
चतुर्नवतिमन्त्रात्मा देवताबाह्य पूर्य्यताम् ॥ ३५ ॥
अत्र याः पञ्च संप्रोक्ता ऋचस्तारस्य पञ्चभिः ।
कलाप्रभेदैश्च मिथो युज्यन्ते ताः पृथक् क्रमात् ॥ ३६ ॥
कुर्य्यात् प्राणप्रतिष्ठाञ्च तत्र तत्र समाहितः ।
प्राणप्रतिष्ठामन्त्रेण पुनस्तोयं कलात्मकम् ।
उच्चारयन् मूलमन्त्रं कलसे सन्निधापयेत् ॥ ३७ ॥
प्रोक्ता पूर्व्वममुष्य शब्दमथ च प्राणा इह प्राणका
स्तद्वज्जीव इह स्थितेति च तथा सर्व्वेन्द्रियाणीति च ।
तद्वद्वाङ्मनसावुदीर्य्य तदनु प्राणा इह यान्त्विति
स्वाहान्तं प्रजपेन्मनुं निश्चितधीः प्राणान् प्रतिष्ठापयेत् ॥ ३८ ॥
अश्वत्थचूतपनसस्तवकैः सूत्रामवल्लरीयुक्तैः ।
सुरतरुधिया पिधाय कुम्भमुखं वेष्टयीत वासोभ्याम् ॥ ३९ ॥
पुनस्तोयगतं देवं साध्यमन्त्रानुरूपतः ।
सकलीकृत्य च गुरुरुपचारान् समाचरेत् ॥ ४० ॥
आसनस्वागते सार्घ्यपाद्ये साचमनीयके ।
मधुपर्काचमस्नानवसनाभरणान्यपि ॥ ४१ ॥
सुगन्धसुमनोधूपदीपान्नैवेद्यवन्दने ।
प्रयोजयेदर्च्चनायामुपचारांस्तु षोड़श ॥ ४२ ॥
अर्घ्यपाद्याचमनमधुपर्काचमनान्यपि ।
गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ॥ ४३ ॥
गन्धादिका निवेद्यान्ता पूजा पञ्चोपचारकी ।
सपर्य्याः त्रिविधाः प्रोक्तास्तासामेकां समाचरेत् ॥ ४४ ॥
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ।
दूर्व्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ॥ ४५ ॥

पाद्यं श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिरुच्यते ।
जातीलवङ्गकक्कोलैर्मतमाचमनीयकम् ॥ ४६ ॥
मधुपर्कञ्च सक्षौद्रं दधि प्रोक्तं मनीषिभिः ।
शुद्धाभिरद्भिर्व्विहितं पुनराचमनीयकम् ॥ ४७ ॥
चन्दनागुरुकर्पूरपङ्कं गन्धमिहेष्यते ।
तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ ॥ ४८ ॥
शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च ।
उत्पलानि च नीलानि कुमुदानि च मालती (१) ॥ ४९ ॥
मल्लिका(२)कुन्दमन्दारनन्द्यावर्त्तादिकानि च ।
पलाशपाटली चार्थपारन्त्यावर्त्तकानि च (३) ॥ ५० ॥
चम्पकानि (४) सनागानि रक्तमन्दारकाणि च ।
अशोकोद्भवबिल्वोत्थकर्णिकारोद्भवानि च ॥ ५१ ॥
सुगन्धानि सुरूपाणि स्वागमोक्तानि यानि च ।
मुकुलैः पतितैर्म्लानैः शीर्णैर्वा जन्तुदूषितैः ॥ ५२ ॥
आघ्रातैरङ्गसंस्पृष्टैरुषितैरपि नार्च्चयेत् ।
सगुग्गुल्वगुरूशीरसिताज्यमधुचन्दनैः ॥ ५३ ॥
साराङ्गारे विनिक्षिप्तैर्मन्त्री नीचैः प्रधूपयेत् ।
गोसर्पिषा वा तैलेन वर्त्त्या च लघुगर्भया ॥ ५४ ॥
दीपितं सुरभिं शुद्धं दीपमुच्चैः प्रदीपयेत् ।
सुशितेन सुशुद्धेन पायसेन सुसर्पिषा ।
सितोपदंशकदलीदध्याद्यैश्च निवेदयेत् ॥ ५५ ॥

(१) "कह्लारकुमुदानि च" इति पाठान्तरम् ।
(२) "मालती" इति पाठान्तरम् ।
(३) "पलाशपाटलापार्थपारल्यावर्त्तकानि च" इति पाठान्तरम् ।
(४) "उत्पलानि" इति वा पाठः ।

वर्णैर्मनुप्रपुटितैः क्रमशः शताद्यैर्न्यासक्रमादभियजेत् सकलासु मन्त्री।
गन्धादिभिः प्रथमतो मनुदेवतासु त्रैलोक्यमोहनमिति प्रथितः प्रयोगः॥ ५६॥
हृदयं सशिरस्तथा शिखया कवचञ्चेत्यनलादिकास्त्रिषु।
पुरतो नयनं दिशां सुमन्त्री पुनरस्त्रञ्च समर्चयेत् क्रमात्॥ ५७॥
हारस्फटिककलायाञ्जनपिङ्गलवह्निरोचिषो ललनाः।
अभयवरोद्यतहस्ताः प्रधानतनवोऽङ्गदेवताः कथिताः॥ ५८॥
आदावङ्गावरणन्तन्त्वलादीरितं विधानेषु।
अन्ते च लोकपालाव्रतिरथ कुलिशादिकानाञ्च॥ ५९॥
इन्द्राग्नियमनिशाचरवरुणानिलधनेशशिवाहिपतिविधयः।
जात्यधिपहेतिवाहनपरिवारान्ताः क्रमेण यष्टव्याः॥ ६०॥
पीतः पिङ्गः कृष्णो धूम्रः श्वेतश्च धूम्रसितशुक्लाः।
काषायारुणाम्बुजाभा लोकेशा वासवादयः प्रोक्ताः॥ ६१॥
वज्रं सशक्तिर्दण्डः खड्गः पाशाङ्कुशौ गदाशूलौ।
रथचरणनलिनसंज्ञौ प्रोक्तान्यस्त्राणि लोकपालानाम्॥ ६२॥
पीतहिमजलदगगनाचिरप्रभारक्तकुन्दनीलरुचः।
करविन्दारुणवर्णाः (१) प्रोक्ताः स्युर्वर्णतोऽपि वज्राद्याः॥ ६३॥
कृते निवेद्ये च ततो मण्डलं परितः क्रमात्।
मङ्गलाऽङ्कुरपात्राणि स्थापनीयानि मन्त्रिणा॥ ६४॥
उपलिप्य कुण्डमत्र स्वचरणयोग्या विलिख्य रेखाश्च।
अभ्युक्ष्य प्रणवेन प्रकल्पयेद्युोगविष्टरं मन्त्री॥ ६५॥
अथवा षट्कोणावृतत्रिकोणके गुरुजनोपदेशेन।
प्राणाग्निहोत्रविधिनाप्यावसथीयाह्वयेऽनलस्थाने॥ ६६॥
तत्राथो सदृतुमतीमतीन्द्रियाभां संस्मृत्य सकलजगन्मयीञ्च शक्तिम्।
तद्योनौ मणिभवमारणेयकं वा तारेणाक्षिपतु गृहोत्थमेव वाग्निम्॥ ६७॥

---

(१) "कुरुविन्दारुणवर्णाः" इति पाठान्तरम्।

चित्पिङ्गलपदमुक्त्वा हनदहपचयुग्मकानि सर्व्वज्ञम् ।
आज्ञापयाऽग्निजाये प्रभाष्य मनुनाऽमुनाऽनलं ज्वालयेत् ॥ ६८ ॥
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतो मुखम् ॥ ६९ ॥
अनेन ज्वलितं मन्त्रेणोपतिष्ठेद्धुताशनम् ।
ततः प्रविन्यसेद्देहे जिह्वामन्त्रैर्विभावसोः ॥ ७० ॥
सलिङ्गगुदमूर्द्धास्यनासानेत्रेषु च क्रमात् ।
ससर्व्वाङ्गेषु जिह्वाश्च वक्ष्यन्ते त्रिविधात्मिकाः ॥ ७१ ॥
हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा ।
बहुरूपाऽतिरक्ता च जिह्वाः सप्तेति सात्विकाः ॥ ७२ ॥
पद्मरागा सुपर्णी (१) च तृतीया भद्रलोहिता (२) ।
लोहिताख्या तथा श्वेता धूमिनी सकरालिका ॥ ७३ ॥
राजस्यः कथिता जिह्वाः क्रमात् कल्याणरेतसः ।
विश्वमूर्त्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ॥ ७४ ॥
लोहिता च करालाख्या काली तामसजिह्विकाः ।
अनलेरार्घिविन्द्वन्ताः पादियान्ताचरान्विताः ॥ ७५ ॥
सात्विका दिव्यपूजासु राजस्यः काम्यकर्म्मसु ।
तामस्यः क्रूरकार्य्येषु प्रयोक्तव्या विपश्चिता ॥ ७६ ॥
सुराः सपितृगन्धर्व्वयक्षनागपिशाचकाः ।
राक्षसाश्च क्रमादग्नेराश्रिता रसनास्वमी (३) ॥ ७७ ॥
जिह्वासु त्रिदशादीनां तत्तत्कार्थसमाप्तये ।
जुहुयाद्वाञ्छितां सिद्धिं दद्युस्ता देवता मताः ॥ ७८ ॥
स्वनामसदृशाकाराः प्रायो जिह्वा हविर्भुजः ।
मन्त्री प्रविन्यसेद्भूयो वह्नेरङ्गानि वै क्रमात् ॥ ७९ ॥

---

(१) "सुवर्णा" इति पाठान्तरम् ।
(२) "रुद्रलोहिता" इति पाठान्तरम् ।
(३) "रसनास्वमी" इति पाठान्तरम् ।

सहस्रार्च्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा ।
धूमव्यापी सप्तजिह्वो धनुर्द्धर इतीरितः ॥ ८० ॥
अङ्गमन्त्रान् क्रमादष्टमूर्त्तीश्चाथ प्रविन्यसेत् ।
मूर्द्धांसपार्श्वकट्यन्धुकटिपार्श्वांसकेषु च ॥ ८१ ॥
प्रादक्षिण्येन विन्यस्येद्यथावद्देशिकोत्तमः ।
जातवेदाः सप्तजिह्वो हव्यवाहन एव च ॥ ८२ ॥
अश्वोदरजसंज्ञश्च सवैश्वानर एव च ।
कौमारतेजाश्च तथा विश्वेदेवमुखाह्वयौ ॥ ८३ ॥
स्युरष्टमूर्त्तयो वह्नेरग्नये पदपूर्व्विकाः ।
प्रणवादिनमोऽन्ताश्च पुनर्द्दर्भचतुष्टयैः ॥ ८४ ॥
दिक्क्रमात्संपरिस्तीर्य्य सम्यग्गन्धादिभिर्यजेत् ।
मध्ये च कोणषट्के च जिह्वाभिः केसरेषु च ॥ ८५ ॥
अङ्गमन्त्रैस्ततो बाह्ये चाष्टभिर्म्मूर्त्तिभिः क्रमात् ।
ततोऽग्निमनुना तेन मन्त्री मध्ये च संयजेत् ॥ ८६ ॥
वैश्वानरं जातवेदसुक्त्वा चेहावहेति च ।
लोहिताक्षपदं सर्व्वकर्म्माणीति समीरयेत् ।
ब्रूयाच्च साधयेत्यन्ते वह्निजायाऽन्तिको मनुः ॥ ८७ ॥

त्रिनयनमरुणाप्तावद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं
नमत कनकमालालङ्कृतांसं कृशानुम् ॥ ८८ ॥

जिह्वा ज्वालारुचः प्रोक्ता वराभययुतानि च ।
अङ्गानि मूर्त्तयः शक्तिस्वस्तिकोद्यतदोर्द्दयाः ॥ ८९ ॥
संस्कृतेन घृतेनाऽभिद्योतनोद्योतितेन च ।
व्याहृत्यनन्तरं तेन मनुना जुहुयाच्चिरः ॥ ९० ॥

गर्भाधानादिका वह्नेः समुद्वाहावसानिकाः ।
क्रियास्तारेण वै कुर्य्यादाज्याहुत्यष्टकैः पृथक् ॥ ९१ ॥
जिह्वाङ्गभूर्त्तिमनुभिरेकाहुत्या(१)हुनेत्ततः ।
जिह्वायां मध्यसंस्थायां मन्त्री ज्वालावलीतनौ ॥ ९२ ॥
ताराद्यैर्दशभिर्भेदैः पूर्व्वपूर्व्वसमन्वितैः ।
मनुना गाणपत्येन हुनेत्पूर्व्वं दशाहुतीः ॥ ९३ ॥
जुहुयाच्च चतुर्व्वारं समस्तेनैव तेन तु ।
आज्येन साध्यमनुना पञ्चविंशतिसंख्यकम् (२) ॥ ९४ ॥
जुहुयात् सर्व्वहोमेषु सुधीरनलतृप्तये ।
तान्त्रिकाणामयं न्यायो हुतानां समुदीरितः ॥ ९५ ॥
पुनः साध्येन मनुना हुनेदष्टसहस्रकम् ।
अथवाष्टशतं सर्पिःसंयुक्तेन पयोम्भसा ॥ ९६ ॥
द्रव्यैर्व्विधानप्रोक्तैर्व्वा महाव्याहृतिपश्चिमम् ।
पुनः समापयेद्धोमं परिषेकावसानकम् ॥ ९७ ॥
भूर्भुवः स्वर्भूर्भुवःस्वः पूर्व्वं स्वाहान्तमेव च ।
अग्नये च पृथिव्यै च महते च समन्वितम् ॥ ९८ ॥
वायवे चान्तरिक्षाय महते च समन्वितम् ।
आदित्याय च वै दिवे महते च समन्वितम् ॥ ९९ ॥
चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यश्च महतेऽन्वितम् ।
महाव्याहृतयस्त्वेताः सर्व्वशो देवतामयाः ॥ १०० ॥
ब्रह्मार्पणाख्यमनुना पुनरष्टावथाहुतीः ।
जुहुयान्मन्त्रवर्य्येण कर्म्मबन्धविमुक्तये ॥ १०१ ॥
इतः पूर्व्वं प्राणबुद्धिदेहधर्म्माधिकारतः ।
जाग्रत् स्वप्नसुषुप्तीनामन्तेऽवस्थास्वितीरयेत् ॥ १०२ ॥

(१) "एकावृत्या" इतिपाठान्तरम् ।
(२) "हुनेदष्टसहस्रकम्" इति पाठान्तरम् ।

ततश्च मनसा वाचा कर्म्मणेति प्रभाषयेत् ।
हस्ताभ्याञ्च तथा पद्भ्यामुदरेणेति भाषयेत् ॥ १०३ ॥
शिश्ना च यत् स्मृतं प्रोक्ता यदुक्तं यत्कृतन्तथा ।
तत्सर्व्वमिति सम्भाष्य ब्रह्मार्पणपदं वदेत् ॥ १०४ ॥
भवत्वन्ते द्विठश्चायं ब्रह्मार्पणमनुर्म्मत: ।
हुते तु देशिक: पश्चान्मण्डले बलिमारभेत् ॥ १०५ ॥
नक्षत्राणां सराशीनां सवाराणां यथाक्रमम् ।
दद्याद्बलिं गन्धपुष्पधूपदीपकमादरात् ॥ १०६ ॥
ताराणामश्विनादीनां राशि: पादाधिकं द्वयम् ।
मेषादिमुक्ता नक्षत्रसंज्ञापूर्व्वमनन्तरम् ॥ १०७ ॥
देवताभ्य: पदं प्रोक्ता दिवा नक्तं पदं वदेत् ।
चारिभ्यश्चाथ सर्व्वेभ्यो भूतेभ्यश्च नमो वदेत् ॥ १०८ ॥
एवं राशौ तु सम्पूर्णे तस्मिंस्तद्वत्प्रयोजयेत् ।
तथा राश्यधिपानाञ्च ग्रहाणां तत्र तत्र तु ॥ १०९ ॥
सप्तानां करणानाञ्च दद्यान्मीनाद्धमेषयो: ।
अन्तराले बलिस्त्वेवं संप्रोक्त: कलशात्मक: ॥ ११० ॥
पुनर्निवेद्यमुद्धत्य पुरावत् परिपूज्य च ।
मुखवासादिकं दत्त्वा स्तुत्या तद्युक्तया पुन: ॥ १११ ॥
स्तुत्वा यथावत्प्रणमेद्भक्तियुक्तस्तु साधक: ।
अष्टाङ्गं वापि पञ्चाङ्गमुभाभ्यां वा समाहित: ॥ ११२ ॥
दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा ।
वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरित: ॥ ११३ ॥
बाहुभ्याञ्च सजानुभ्यां शिरसा वचसा धिया ।
पञ्चाङ्गक: प्रणाम: स्यात् पूजासु प्रवराविमौ ॥ ११४ ॥
गुर्व्वाद्यास्तारादिका यागमन्त्रा लोकेशान्तास्ते चतुर्थीनमोऽन्ता: ।
पूजायामप्यग्निकार्य्ये द्विठान्ता वीजै: पूजा स्याद्विभक्त्या वियुक्तै: ॥११५॥

वाससी च पुनरङ्गुलिभूषां होमकृत् सुमुखजप्रवरेषु ।
ईश्वरार्पणमिति प्रति दत्त्वा बर्द्धितो द्विजमुखेरितवाग्भिः ॥ ११६ ॥
नत्वा ततस्तनुभृति परमात्मनि स्वं द्रव्यार्द्धमेव गुरवे चतुरंशकं वा ।
दत्त्वा दशांशमथवापि च वित्तशाठ्यं हित्वार्पयेन्निजतनुं तदधीनचेताः ॥११७॥
अथ पटुतरमुख्यवाद्यघोषैर्द्विजमुखनिष्पतदाशिषां रवेण ।
सुनियतमपि सुस्थितं च शिष्यं कलशजलैरभिषेचयेद्यथावत् ॥ ११८ ॥
यथा पुरा पूरितमन्त्ररैर्घटैः सुधामयैः शिष्यतनौ तथैव तैः ।
प्रपूरयन्मन्त्रिवरोऽभिषेचयेदवाप्तये मङ्क्षु यथेष्टसम्पदाम् ॥ ११९ ॥
विमले परिधाय वाससी पुनराचम्य गुरुं प्रणम्य च ।
निकटे समुपासते वदेदपि शिष्याय मनुं त्रिशो गुरुः (१) ॥ १२० ॥
गुरुणा समनुगृहीतं मन्त्रं सद्यो जपेच्छतावृत्त्या ।
गुरुदेवतामनूनामैक्यं सम्भावयन् धिया शिष्यः ॥ १२१ ॥
मन्त्रे मन्त्रगुरावपि मन्त्री मन्त्रस्य देवतायाञ्च ।
त्रिषु विहितसततभक्तिः प्रेत्येह निजेप्सितं फलं लभते ॥ १२२ ॥
सङ्क्षेपादिति गदिता हिताय दीक्षा जन्तूनां प्रवरफलप्रदाऽचिराय ।
प्राप्यैनां जपविधिरादरेण कार्य्यो विद्वद्भिः सहुतविधिर्निजेष्टसिद्ध्यै ॥ १२३ ॥
प्रोक्तेनैवं कलशविधिनैकेन वाऽनेककुम्भै-
र्भक्त्या यो वा सुमतिरभिषिञ्चेन्नरो मन्त्रजापी ।
कामान् प्राप्नोत्ययमिह परत्रापि किं तत्र चित्रं
लोकेऽचिन्त्यो न खलु मणिमन्त्रौषधीनां प्रभावः ॥ १२४ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे षष्ठः पटलः ॥ * ॥

---

(१) "निकटे समुपासतो वदेदथ शिष्यस्य मनुं त्रिशो गुरुः" इति पाठान्तरम् ।

## सप्तमः पटलः ।

अथाक्षराणामधिदेवतायाः समस्तबोधस्थितिदीपिकायाः ।
अशेषदुःखप्रशमाय नॄणां वक्ष्ये जपादेः प्रवरं विधानम् ॥ १ ॥
ब्रह्मास्या ऋषिरीरितः सुमतिभिर्गायत्रसुक्तञ्च त-
च्छन्दस्त्वेव सरस्वती निगदिता मन्त्रेषु तद्देवता ।
आद्यन्तस्वरषट्कलघुपरयोरन्तस्थितैः कादिभि-
र्व्वर्गैर्यान्तगतैः क्रमेण कथितान्यस्याः (१) षड़ङ्गानि च ॥ २ ॥
पञ्चाशद्वर्णभेदैर्व्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देशां भास्वत्कपर्द्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ ३ ॥
कानननत्तहशक्षिश्रुतिनो गण्डौष्ठदण्डमूर्द्धास्ये ।
दोःपत्सन्ध्यग्रकेषु च पार्श्वद्वयपृष्ठनाभिजठरेषु ॥ ४ ॥
हृद्दोर्मूलापरगलकक्षेषु हृदादिपाणिपादयुगे ।
जठरानलयोर्व्यापकसंज्ञाद्यस्येदथो वर्णान् क्रमशः ॥ ५ ॥
संदीक्षितो विमलधीर्गुरुणाऽनुशिष्टो लक्षं न्यसेत् सुनियतः प्रजपेच्च तावत् ।
अन्तेऽयुतं प्रतिहुनेन्मधुरत्रयाक्तैः शुद्धैस्तिलैरपि यजेद्दिनशोऽक्षरेशीम् ॥ ६ ॥
व्योमाविःसचतुर्द्दशस्वरविसर्गान्तस्फुरत्कर्णिकं
किञ्जल्कालिखितस्वरं प्रतिदलप्रारब्धवर्गाष्टकम् ।
क्ष्माबिम्बेन च सप्तमार्णवयुजास्त्राशासु संवेष्टितं
वर्णाब्जं शिरसि स्मृतं विषगदप्रध्वंसि मृत्युञ्जयम् ॥ ७ ॥

---

(१) "न्यासाः षड़ङ्गानि च" इति पाठान्तरम् ।

प्रविधाय पद्ममथ पीठमथो कथितक्रमेण विधिनाभियजेत् ।
नवभिश्च शक्तिभिरिहैव सहावरणैः समर्च्चयतु वर्णतनुम् ॥ ८ ॥
मेधा प्रज्ञा प्रभा विद्या धीर्धृतिस्मृतिबुद्धयः ।
विद्येश्वरीति संप्रोक्ता भारत्या नव शक्तयः ॥ ९ ॥
अङ्गान्यादौ तदनु च कलायुग्मशश्चाष्टवर्गान्
ब्रह्माण्याद्याः शतमखमुखाद्यानथो लोकपालान् ।
मुख्यैर्गन्धैः प्रवरकुसुमैर्धूपदीपैर्निवेद्यै-
र्व्वर्णान् जापी यजतु दिनशो भारतीं भक्तिनम्रः ॥ १० ॥
ब्रह्माणी माहेशी कौमारी वैष्णवी च वाराही ।
इन्द्राणी चामुण्डा समहालक्ष्मीश्च मातरः प्रोक्ताः ॥ ११ ॥
वर्गस्वरयाद्यंशाः क्रमेण कलधौतरजतताम्राः स्युः ।
इति रचितं रुचकमिदं साधकसर्व्वार्थदायि सततं स्यात् ॥ १२ ॥
त्रिवारमब्धः परिजप्तमेतया पिवेद्दिनादावपि विद्यया सुधीः ।
अनेडमूकोऽपि कवित्वगर्व्वितः पराञ्च सिद्धिं (१) लभतेऽर्कमासतः ॥ १३ ॥
कमलोद्भवौषधिरसेन वचया पयसा च पक्वमथ सर्पिरपि ।
अयुताभिजप्तममुना दिनशो लिहतां कविर्भवति वत्सरतः ॥ १४ ॥
वर्णौषध्यास्तताभिः कलशममलधीरद्भिरापूर्य्य नूनं
प्रातस्तेनाभिषिञ्चेद्दशशतपरिजप्तेन यं वापि मासम् ।
स स्यान्मेधेन्दिरायुः प्रथमकवियशो (२) विश्वसंवादयुक्तो
नारी बन्ध्यापि नानागुणगणनिलयं पुत्रवर्य्यं प्रसूते ॥ १५ ॥
आधारोद्यच्छक्तिविन्दूत्थिताया वक्त्रे मूर्द्धेन्दुं ग्रसन्त्याः प्रभायाः ।
चाद्यान्तार्णान् पातयेद्वह्निसोमप्रोतान्मन्त्री मुच्यते रोगजातैः ॥ १६ ॥
विन्यासैरथ सजपैर्हुतार्च्चनाद्यैर्ध्यानैन प्रभजति भारतीं नरो यः ।
स श्रीमान् पुनरचिरेण काव्यकर्त्ता च्वेलादीन् जयति जरापमृत्युरोगैः ॥१७॥

---

(१) "कीर्त्तिम्" इति पाठान्तरम् । (२) "प्रथमकवियशः" इति वा पाठः ।

कलाः कलानादभवा वदन्त्यजाः कचादिवर्णानुभवाष्टतादिकान् ।
पयादिकान्माचरजाश्च विन्दुजाः क्रमादनन्तावधिकास्तु षादिकान् ॥ १८ ॥

कुर्य्यात् कलाभिराभिर्म्मन्त्री दिनशस्तनौ कलान्यासम् ।
सान्निध्यकृत् स मर्त्यः (१) प्रतिमाकलशादिषु प्रविज्ञेयः ॥ १९ ॥

मन्त्रोद्धारविधानेन वर्णव्यत्यासक्लृप्तिरुद्दिष्टा ।
आभिः श्रीकण्ठादिप्रोक्तैर्व्वा नामभिर्व्वा विशेषज्ञैः ॥ २० ॥

अष्टाचरोक्तमनुवर्ण्यविशिष्टमूर्त्तिं संस्मृत्य विष्णुमपि मन्त्रितमो यथावत् ।
वर्णैर्न्यसेदपि पुरेव च केशवादिमूर्त्त्या युतैर्व्वपुषि भक्तिभरावनम्रः ॥ २१ ॥

रुद्रादीन् शक्तियुतान् न्यसेदाद्यांस्त्वगादिसप्तधातुयुतान् ।
श्रीकण्ठादौ विद्वान् वर्णान् प्राग्वीजसंयुतांश्चापि ॥ २२ ॥

सिन्दूरकाञ्चनसमोभयभागमर्द्धनारीश्वरं गिरिसुताहरचिह्नभूषम् ।
पाशाभयाचवलयेष्टदहस्तमेवं स्मृत्वा न्यसेत् सकलवाञ्छितवस्तुसिद्धै ॥ २३ ॥

शक्त्या शक्तिश्रीभ्यां शक्तिश्रीक्लींभिरन्वितैर्व्वर्णैः ।
श्रीशक्त्या युगस्मराद्यैरथवा विहितः समृद्धये न्यासः ॥ २४ ॥

अथानया पञ्चविभेदभिन्नया प्रपञ्चयागस्य विधिः प्रकथ्यते ।
कृते तु यस्मिन्निह साधकोत्तमाः प्रयान्ति निर्व्वाणपदं तदव्ययम् ॥ २५ ॥

पूर्व्वं महागणपतिं स्वविधानसिद्धरूपञ्च साङ्गमपि सावरणं विचिन्त्य ।
वीजेन संयुतमृचा प्रजपेत मालामन्त्रं निजेष्टविषयेऽवहितो यथावत् ॥ २६ ॥

सचतुश्चत्वारिंशद्वारं बीजं तथैकवारमृचम् ।
प्रजपेच्चतुरावृत्त्या मालापूर्व्वं मनुञ्च मन्त्रितमः ॥ २७ ॥

समुनिच्छन्दो दैवतमपि साङ्गमातृकां च विन्यस्येत् ।
प्रागभिहितेन विधिना वारत्रितयं ग्रहांश्च सप्त तथा ॥ २८ ॥

वदने च बाहुपादद्वितये जठरे च वक्षसि यथावत् ।
अर्काद्यान्विन्यसेत् क्रमेण मन्त्री स्वरादिवर्गेशान् ॥ २९ ॥

---

(१) "समर्थः" इति वा पाठः ।

तारश्च शक्तिरजपा परमात्मबीजं
वह्नेः प्रियां च गदिता इति पञ्च मन्त्राः ।
एभिस्तृतीयलिपिभिः कथितः प्रपञ्च-
यागाह्वयो हुतविधिः सकलार्थदायी ॥३०॥

ब्रह्मा स्यादृषिरस्य च छन्दः परमान्विता च गायत्री ।
सकलपदार्थानुगतं परिपूर्णं (१) देवता परं ज्योतिः ॥ ३१ ॥

जायाग्नेर्हृदयमथो शिरश्च सोऽहं
हंसात्मा लथ च शिखा स्वयञ्च वर्म्म ।
ताराख्यं समुदितमीत्तणं तथास्त्रं
प्रोक्तं स्याद्धरिहरवर्णमङ्गमेवम् ॥ ३२ ॥

अत्राकारहकाराद्यावाद्यौ शान्तान्तिकौ मनू ।
हकाराद्याप्यकारश्च विन्दुः सर्गी च साचरम् ॥ ३३ ॥
साकारश्चात्ममन्त्रः षड़िन्द्रियात्मक उच्यते ।
सकारौकारहाकारा विन्दुः पञ्चार्णको मनुः ॥ ३४ ॥
करणात्मसमायुक्तः परमात्माह्वयो मनुः ।
सवाकारैर्हृदीर्घाभ्यां वह्निजायामनुर्म्मतः ॥ ३५ ॥
वागादीन्द्रियसम्भिन्नः सोऽयं पञ्चाचरात्मकः ।
तस्मादेभिः कृतो न्यासो विशेषादवरोहकृत् ।

ब्रह्मा बृहत्तया स्यात् परमपदेन प्रकाशितः प्रवरः ॥ ३६ ॥
गायकसन्त्राणनतो गायत्रं समुदीरितं छन्दः ।
परमन्यदतिशयं वा ज्योतिस्तेजो निरूपितेऽन्यद्‌यत् ॥ ३७ ॥
अतिशयि च नितरामिति कथितैवं देवता परं ज्योतिः ।
स्वेति स्वर्गः स्वेति चात्मा समुक्तो हेत्याहूतिर्हेति विद्याद्‌गतिञ्च ॥ ३८ ॥
स्वर्गात्मावध्याततधामशाखा वह्नेर्जाया यत्र हूयेत सर्व्वम् ।
स इति परिततं परन्तु तेजस्त्वमहमिति मय्युदिते मनोऽस्य यत्र ॥३९॥

(१) "सकलपदार्थसदर्थपरिपूर्णम्" इति वा पाठः ।

तदिति सकलचित्प्रकाशरूपं कथितमिदं शिरसोऽपि मन्त्रमेवम्।
हमिति प्रकाशितो हंस इति च सकलप्रकाशनिर्व्वाणम्॥ ४०॥
अतुलमनुष्णमशीतं यत्तदितीत्थं प्रकाशितेह शिखा।
प्रतिमथ्य गुणत्रयानुबद्धं सकलं स्थावरजङ्गमाभिपूर्णम्॥४१॥
स्वगुणैर्निजबिन्दुसन्तताात्माऽखिललोकस्थितिवर्म्ममन्त्र उक्तः।
आद्यैस्त्रिभेदैस्तपनान्तिकैर्यत् सृजत्यजस्रं जगतोऽस्य भावम्॥ ४२॥
तेजस्तदेतन्मनुवर्य्यकस्य नेत्रत्रयं सन्त उदाहरन्ति।
हञ्काराख्यो धातुर्हरणार्थे साधकानभीष्टान्॥ ४३॥
संहरतीति यदेतत्तेजोरूपं तदस्त्रमन्त्रः स्यात्।
यदा लिपिविभिन्नोऽयं तदात्माष्टाक्षरः स्मृतः॥ ४४॥
एतत् सर्व्वप्रपञ्चस्य मूलमष्टाक्षरं स्मृतम्।
प्रपञ्चयागस्त्वमुना कृतो न्यासविधिर्म्मतः॥ ४५॥
वर्णैर्हृदेऽनले द्रव्यैर्विद्याद्धुतविधिं द्विधा।
मातृकान्यासवत्साङ्गं लिपिनाष्टाक्षरेण तु॥ ४६॥
नित्यं न्यसेत् संयतात्मा पञ्चाशद्दारमुत्तमम्।
पञ्चज्ञानेन्द्रिया वर्णाः सर्व्वास्तु लिपयो मताः॥ ४७॥
ताभिराराततं सर्व्वं तत्तदिन्द्रियगोचरम्।
स्मर्त्तव्याशेषलोकान्तर्व्वर्त्ति यत्तेज ऐश्वरम्॥ ४८॥
ब्रह्माग्नौ जुहुयात्तस्मिन् सदा सर्व्वत्र वर्त्तिनि।
ब्रह्मात्मभिर्म्महामन्त्रैर्ब्रह्मविद्भिः समाहितैः।
ब्रह्माग्नौ ब्रह्महविषा हुतं ब्रह्मार्पणं स्मृतम्॥ ४९॥
एवं वर्णविभेदभिन्नमदृढं मांसास्थिमज्जावृतं
देहं तत् चरमचरे सुविशदे सर्व्वत्र वर्त्तिन्यथ।
हुत्वा ब्रह्महुताशने विमलधीस्तेजःस्वरूपी स्वयं
भूत्वा सर्व्वमनून् जपेदपि यजेद्ध्यायेत्तथाराधयेत्॥ ५०॥

शुद्धश्चाथ सविन्दुकास्त्वथ कलायुक्तेशवाद्यैर्युतः
श्रीकण्ठादियुतश्च शक्तिकमलामारैश्च चैकैकशः ।
न्यासास्ते दशधा पृथङ्निगदिताः स्युर्ब्रह्मयागान्तिकाः
सर्व्वे साधकसिद्धिसाधनविधौ सङ्कल्प्य कल्पद्रुमाः ॥ ५१ ॥
प्रपञ्चयागस्तु विशेषतो विपत्प्रपञ्चसंसारविशेषयापकः ।
परञ्च नित्यं भजतामयत्नतः परस्य चार्थस्य निवेदकः सदा ॥ ५२ ॥
द्रव्यैर्यथा यैः क्रियते प्रपञ्चयागक्रिया तानि तथैव सम्यक् ।
यास्वप्यवस्थासु च तास्च कृत्वा प्राप्नोति यत्तत् कथयामि सर्व्वम् ॥५३॥
प्रोक्तक्रमेण विघ्नान्तिक(१)मपि हुत्वा घृतेन मन्त्रितमः ।
एकावृत्त्या जुहुयात् प्रपञ्चयागाह्वयं घृतेन ततः ॥ ५४ ॥
अश्वत्थोडुम्बरप्लक्षन्यग्रोधसम्भवाः समिधः ।
तिलसर्षपदौग्धघृतान्यष्टद्रव्याणि संप्रदिष्टानि ॥ ५५ ॥

एतैर्जुहोतु अयुताधिकलक्षसंख्यं
मन्त्री ततोऽर्द्धमथवापि तदर्द्धकं यः ।
स लैहिकीं सकलसिद्धिमवाप्य वाञ्छा-
योग्यां पुनः परतरं च परत्र याति ॥ ५६ ॥

एकद्विकत्रिकचतुष्कशताभिवृद्धरा तान्तां समीक्ष्य विकृतिं प्रजुहोतु मन्त्री ।
क्षुद्रज्वरादिविषमग्रहभूतयक्षरक्षःपिशाचजनिते महति प्रकोपे ॥ ५७ ॥
द्वादशसहस्रमथवा तद्द्विगुणं वा चतुर्गुणं वाथो जुहुयात् ।
क्षुद्रग्रहरिपुविषमज्वरभूतसम्भवे कोपे ॥ ५८ ॥
अयथा प्रतिपत्तिमन्त्रकाणां प्रजपात् स्यादिह विस्मृतिर्नराणाम् ।
शमयेदचिरात् सहस्रवृत्त्या मतिमान् वसुभिरेभिरेव जुह्वन् ॥ ५९ ॥
एतैः सहस्रद्वितयाभिवृद्धरा जुहोति यस्तु क्रमशो यथावत् ।
जयेत् क्षणेनैव स विस्मृतिञ्च शापस्मृतिं शापभवांश्च दोषान् ॥ ६० ॥

---

(१) "विघ्नादिकम्" इति वा पाठः ।

मधुरत्रयावसिक्तैरेतैर्लक्षं जुहोति यो मन्त्री ।
तस्य सुराधिपविभवो महद्दश्या तृणलवायते न चिरात् ॥ ६१ ॥
लक्षं तदर्द्धकं वा मधुरत्रयसंयुतैर्हुनेदेतैः ।
अब्दत्रयादथार्व्वाक् त्रिभुवनमखिलं वशीकुरुते ॥ ६२ ॥
वश्यादिकानि कर्म्माण्यभिकाङ्क्षन्नेभिरेव स द्रव्यैः ।
जुहुयाच्च कार्य्यगुरुतालाघवमभिवीक्ष्य योग्यपरिमाणम् ॥ ६३ ॥
लक्षं तिलैर्व्वा जुहुयादघानां शान्त्यैश्रियेऽथो नलिनैर्यथावत् ।
दौग्धेन पुष्ट्यै यशसे घृतेन वश्याय जातीकुसुमैश्च लोणैः ॥ ६४ ॥
शालीतण्डुलचूर्णकैस्त्रिमधुरासिक्तैः स्वसाध्याकृतिं
कृत्वाऽष्टोर्द्ध्वशताख्यमस्य शितधीः प्राणान् प्रतिष्ठाप्य च ।
न्यासोक्तक्रमतो निशासु जुहुयात्तां सप्तरात्रं नरो
नारी वा वशमेति मङ्क्षु विधिना तेनैव लोणेन वा ॥ ६५ ॥
पञ्चाशदोषधिविपाचितपञ्चगव्यजातं घृतेन शतहृत्ति हुनेद्घटाग्नौ ।
तावत् प्रजप्य विधिनाभिसमर्च्य सिद्धं भस्मादतीत सकलाभ्युदयावहन्तत् ॥६६॥
अनुदिनमनुलिम्पेत्तेन किञ्चित् समद्या-
त्तिलकमपि विदध्यादुत्तमाङ्गे क्षिपेच्च ।
अनुतंतदुरितापस्मारभूतापमृत्यु-
ग्रहविषरहितः स्यात् प्रीयते च प्रजाभिः ॥ ६७ ॥
एकादशार्द्धकणिकाम्बरकाञ्चनंस्य दद्यात्तदेव गुरवेऽथ सहस्रहोमे ।
अर्द्धोर्द्ध्वपञ्चकणिका द्विगुणा च सार्द्धा स्याद्दक्षिणेहकथिता मुनिभिस्त्रिधेवम् ॥६८॥
निर्जेसितं दिव्यजनैः सुरद्रुमात् समस्तमेव (१) प्रतिलभ्यते यथा ।
प्रपञ्चयागादपि साधकैस्तथा करप्रचेयाः सकलार्थसिद्धयः ॥ ६९ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे सप्तमः पटलः ॥ * ॥

---

(१) "अयत्नमेव" इति वा पाठः ।

# अष्टमः पटलः ।

अथ हितविधये विदुषां वक्ष्ये प्राणाग्निहोत्रविहितविधिम् ।
बध्वा पद्मासनमृजुकायो मन्त्री विशेत् पुरोवदनः ॥ १ ॥
शक्तेः सत्त्वनिबद्धमध्यमथ तन्मायारजोवेष्टितं
प्रागग्रचोऽनिलदिग्गताश्विजठरं मध्ये च नाभेरधः ।
मध्ये प्राग्वरुणेन्दुयाम्यलसितैः कुण्डैर्ज्वलद्वह्निभि-
र्मूलाधारमनारतं समतलं योगी स्मरेत् सिद्धये ॥ २ ॥
मध्येन्द्रवरुणशशियमदिग्भवानि क्रमेण कुण्डानि ।
आवसथजसभ्याहवनीयान्वाहार्य्यगार्हपत्यानि ॥ ३ ॥
चिद्रूपात् सकलप्रभाप्रभवकान्मूलप्रकृत्यात्मनः
कल्पार्कात् प्रतिलोमतोऽमृतमयीं ज्योतीरुचाच्छां धिया ।
सृष्टामक्षरमालिकान्तु जुहुयात् कुण्डेषु तेषु क्रमात्
कल्पान्ताग्निशिखास्फुरत्कुहरकेष्वास्नावितां वर्णशः ॥ ४ ॥
चाद्यास्ते सप्तवर्गा मरकतपशुभेदाह्वनीलाभ्रवर्णा
भूयः स्युर्विद्रुमाभाः कुलिशसमरुचः पुष्पवैदूर्य्यभासः ।
सर्व्वे ते पञ्चशोऽभिस्रवदमृतमया व्यापकस्पर्शसंज्ञा
मुक्तामाणिक्यरूपाः सुमतिभिरुदिताश्चाष्टशः स्युः स्वराख्याः ॥ ५ ॥
घृतानि (१) केतोरमृताकरारेर्म्मन्दस्य जीवस्य च सोमजस्य ।
शुक्रारसोमांशुमतां क्रमेण नवैव रत्नानि विदुर्नवानाम् ॥ ६ ॥
इत्येवं हुतविधिमन्वहं दिनादौ ये सम्यग्विदधति मन्त्रिणः शतार्द्धम् ।
ते रत्नैरपि कनकांशुकैः सधान्यैः सम्पन्नाः सकलजगत्प्रिया भवन्ति ॥ ७ ॥

---

(१) "एतानि" इति वा पाठः ।

अन्त्यगवर्गान्त्याऽसि वामश्रवणान्यथावसथजाते ।
असितावववर्गचतुर्थां सूक्ष्मां सत्याह्वये च सश्रोत्राः ॥ ८ ॥
हलयुतवर्गद्वितीयौ पराः शान्तीश्च पश्चिमे वह्नौ ।
भृगुरेफफादिपञ्चकसद्योऽतिथिलोचनानि सव्येऽग्नौ ॥ ९ ॥
मज्जात्वग्वर्गादिकभौतिकभावाह्वयप्रतिष्ठाश्च ।
गार्हपत्ये जुहुयादित्युक्तं होमकर्म्म वर्णानाम् ॥ १० ॥
व्योम्ना मध्योत्थितेऽग्नावखिलमविरतं शब्दमैन्द्रेऽनिलेन
स्पर्शं स्वेनैव रूपं पुनरपरभवे सोमजेऽब्धीरसञ्च ।
याम्ये गन्धं पृथिव्योभयरुचिरुचिरेष्वच्चरौघैर्हुनेद्यो
मन्त्री स्यात् सर्व्वविद्यप्रतिमथनसमुद्भासितप्रत्यगात्मा॥ ११ ॥
सतारशत्त्याद्यजपान्तमेवं हुत्वा महात्माथ शतार्द्धसंख्यम् ।
विन्यस्य तावच्च तथैव सूत्रमात्राकृतिर्नित्यतनुश्च भूयात् ॥ १२ ॥
कल्यादित्यमुखः स्वमूलविलसत् कल्यानलान्तः स्फुर-
च्चन्द्रार्कग्रहकालभूतभुवनब्रह्मेशविष्ण्वादिकः (१) ।
अव्यक्तोऽक्षरसंज्ञकोऽमृतमयस्तेजोदयोद्यत्प्रभो
नित्यानन्दमयस्त्वनादिनिधनो यः स्यात् स हंसात्मकः ॥ १३ ॥
अनुदिनममुना भजतां विधिनाहारक्रियासु मन्त्रविदाम् ।
प्राणाद्याः सुम्मरुतो गार्हपत्यादिकानि कुण्डानि ॥ १४ ॥
सप्तम्यन्तां च कुण्डाख्यामाख्याञ्च मरुतामपि ।
हिरण्यागगनारक्ताकृष्णाभिर्व्वर्णमीरयेत् ॥ १५ ॥
ससुप्रभाभिः सहितं शुचयः पावका इति ।
अग्निं विहृत्य चेत्येवमात्मानमुपचर्य्य च ॥ १६ ॥
जङ्घाधस्तिर्य्यगूर्द्ध्वाधस्तिर्य्यक्सममथो वदेत् ।
गच्छन्तूक्त्वा ठयुग्मञ्च पञ्चाग्नीन् संस्मरेत्ततः ॥ १७ ॥

(१) "विष्ण्वात्मकः" इति वा पाठः ।

हुताहुतिसमुद्दीप्तशिखासंयुक्तरोचिषः ।
गार्हपत्यादिकं भूय उपचर्य्यान्तमेव च ॥ १८ ॥
मन्त्रं सर्व्वमनुक्रम्य जिह्वाः संस्मृत्य सर्व्वशः ।
बहुरूपान्तु सङ्कल्प्य पञ्चानलशिखायुताम् ॥ १९ ॥
अहं वैश्वानरो भूत्वा जुहोम्यन्नं चतुर्व्विधम् ।
पचाम्येवं विधानेनेत्यापूर्णं संयतेन्द्रियः ॥ २० ॥
तूष्णीं हुत्वा पिधायाङ्गिरुपस्पृश्य विधानतः ।
आरभ्य मूलाधारं स्वमामस्तकमनुस्मरेत् ॥ २१ ॥

क्षेत्रज्ञसंज्ञकममुं प्रकृतिस्थमाद्यं
व्याप्तद्विसप्तभुवनान्तमनन्यमेकम् ।
पञ्चानलाग्निरसनापरिदत्तशुद्ध-
सान्नाय्यतर्पितमतर्कितमात्मरूपम् ॥ २२ ॥

संचिन्त्याचरिताम्ताचरप्रतार्द्राम्भोऽवसिक्तं हवि-
स्तैर्जप्ता कुटिलान्तराधिरधिकं संदीप्तपञ्चानलः ।
सायं प्रातरनेन होमविधिना भोज्यानि नित्यं भजन्
प्राणानप्रमदोदरं प्रविशति प्राणाग्निहोत्री पुनः ॥ २३ ॥
इति तव षड़ङ्गवेदशास्त्राद्युपहितसर्व्वविकारसङ्गमातुः ।
तनुरियमुदिता विरिञ्चविश्वस्थितिलयसृष्टिकरीह वर्णमाला ॥२४॥

इति जगदनुषक्तां तामिमां वर्णमालां
न्यसत जपत भक्त्या जुहुताभ्यर्चयीत ।
निरुपमकवितायुःकीर्त्तिकान्तीन्दिरास्यै
सकलदुरितदुःखोच्छित्तये मुक्तये च ॥ २५ ॥

इतीरिता सकलजगत्प्रभाविनी
क्रमोत्क्रमक्रमगुणितार्णमालिका ।
अभीष्टसाधनविधये च मन्त्रिणां
भवेन्मनुप्रतिपुटिताक्षरमालिका ॥ २६ ॥

मध्ये वयच्चरयोः सदवदवाग्वार्णकानि चन्द्रयुगे ।
प्रोक्ता दशाक्षरीयं कण्वविराजौ च वाग्टषिप्रमुखाः ॥ २७ ॥
कर्णोत्रनयननासावदनाम्बुगुदेषु विन्यसेद्वर्णान् ।
स्वरपुटितैरथ हल्भिः कुर्य्यादङ्गानि षट् क्रमान्मन्त्री ॥ २८ ॥

अमलकमलसंस्था लेखनीपुस्तकोद्यत्-
करयुगलसरोजा कुन्दमन्दारगौरी ।
धृतशशधरखण्डोल्लासिकोटीरचूड़ा
भवतु भवभयानां भञ्जिनी भारती वः ॥ २९ ॥

अक्षरलक्षजपान्ते जुहुयात्कमलैः सितैः पयोऽभ्यक्तैः ।
त्रिमधुरयुतैः सुशुद्धैरयुतं नियतात्मकस्तिलैरथवा ॥ ३० ॥
मातृकोक्तविधिनाक्षराम्बुजे शक्तिभिश्च विनियुज्य पूर्व्ववत् ।
पीठमत्र वचसामधीश्वरीं पूजयेत् प्रथममङ्गमन्त्रकैः ॥ ३१ ॥
योगा सत्या विमला ज्ञाना बुद्धिः स्मृतिस्तथा मेधा ।
प्रज्ञेत्यष्टाभिर्मातृभिरपि लोकेशैः प्रपूजयेत् क्रमशः ॥ ३२ ॥
इति सिद्धमनुर्मनोजदूरो न चिरादेव कविर्भवेन्मनस्वी ।
जपहोमरतः सदावगच्छन् वनितां वागधिपतिर्गौरवेण ॥ ३३ ॥

न्यासान्वितं निश्चितधीः प्रजपेत् सहस्र-
मष्टौ मुखेऽनुदिवसं प्रपिबेत्तथापः ।
तन्मन्त्रिताः पुनरयन्त्रितमेव वाचां
सिद्धिर्भवेदभिमता परिवत्सरेण ॥ ३४ ॥

हृदयद्वयसंस्थितोऽथ तोये रविबिम्बे प्रतिपद्य वागधीशाम् ।
जपतस्त्रिसहस्रसंख्यमर्व्वाक् कवितामण्डलतो भवेत् प्रभुता ॥ ३५ ॥
पलाशबिल्वप्रसवैस्तयोश्च समिद्वरैः स्वादुयुतैश्च होमः ।
कवित्वसौभाग्यकरः समृद्धिलक्ष्मीप्रदो रञ्जनकृच्चिराय ॥ ३६ ॥
चतुरङ्गुलजैः समित्प्रसूनैर्जुहुयाद्गुयो मधुरत्रयाऽवसिक्तैः ।
मनुजः समवाप्य धीविलासानचिरात्काव्यकृतां भवेत् पुरोगः ॥ ३७ ॥

सुविमलनखदन्तपाणिपादो मुदितमनाः परदूषणेषु मौनी ।
हरिहरकमलोद्भवाङ्घ्रिभक्तो भवति चिराय सरस्वतीनिवासः ॥ ३८ ॥
आद्यन्तप्रणवशक्तिमध्यसंस्था
वाग्भूयो भवति सरस्वती च ङेन्ता ।
नत्यन्तो मनुरयमीशसंख्यवर्णः
संप्रोक्तो भुवि भजमानपारिजातः ॥ ३९ ॥
सौषुम्नाग्रे भ्रूयुगमध्ये नवके तथैव रन्ध्राणाम् ।
विन्यस्य मन्त्रवर्णान् कुर्य्यादङ्गानि षट् क्रमाद्वाचा ॥ ४० ॥
हंसारूढ़ा हरहसितहारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौलिबद्धेन्दुरेखा ।
विद्यावीणाऽमृतमयघटाऽक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥ ४१ ॥
दिनकरलक्षं प्रजपेन्मन्त्रमिमं संयतेन्द्रियो मन्त्री ।
द्वादशसहस्रकमथो सितसरसिजनागचम्पकैर्जुहुयात् ॥ ४२ ॥
पूजायां पार्श्वयुगे ससंस्कृता प्राकृता च वाग्देव्याः ।
केवलवाङ्मयरूपे सम्पूज्याङ्गैश्च शक्तिभिस्तदनु ॥ ४३ ॥
प्रज्ञा मेधा श्रुतिरपि शक्तिः स्मृत्याह्वया च वागीशी ।
सुमतिः स्वस्तिभि(१)राभिर्मातृभिराशेश्वरैः क्रमात् प्रयजेत् ॥ ४४ ॥
इति निगदितो वागीश्वर्य्याः सहोमजपार्च्चना-
विधिरनुदिनं मन्त्री त्वेनां भजन् परिमुच्यते ।
सकलदुरितैर्मेधालक्ष्मीयशोभिरवाप्यते
परमपरमां भक्तिं प्राप्योभयत्र च मोदते ॥ ४५ ॥
इति मातृकाविभेदान् प्रजपन्मन्त्रद्वयञ्च मन्त्रितमः ।
प्रजपेदेनां स्तुतिमपि दिनशो वाग्देव्यनुग्रहाय बुधः ॥ ४६ ॥

---

(१) "सुस्थितिः" इति वा पाठः ।

अमलकमलाधिवासिनि मनसो वैमल्यदायिनि मनोज्ञे ।
सुन्दरगात्रि सुशीले तव चरणाम्भोरुहं नमामि सदा ॥ ४७ ॥
अचलात्मजा च दुर्गा कमला त्रिपुरेति भेदिता जगति ।
या सा त्वमेव वाचामीश्वरि सर्व्वात्मना प्रसीद मम ॥ ४८ ॥
त्वच्चरणाम्भोरुहयोः प्रणामहीनः पुनर्द्विजातिरपि ।
भूयादनेड्मूकस्त्वज्ज्ञो भवति देवि सर्व्वज्ञः ॥ ४९ ॥
मूलाधारसुखोद्गतविसतन्तुनिभप्रभाप्रभावतया ।
विस्तृतलिपिव्रातात्तिमुखकरचरणादिके प्रसीद मम ॥ ५० ॥
वर्णतनोऽमृतवर्णे नियतमतिभिर्वर्णितेऽपि योगीन्द्रैः ।
निर्णीतिकरणदूरे वर्णयितुं देहि देवि सामर्थ्यम् ॥ ५१ ॥
ससुरासुरमौलिलसन्मणिप्रभादीपिताङ्घ्रियुगनलिने ।
सकलागमस्वरूपे सर्व्वेश्वरि सन्निधिं विधेहि मयि ॥ ५२ ॥
पुस्तकजपवटहस्ते वरदाभयचिह्नचारुबाहुलते ।
कर्पूरामलदेहे वागीश्वरि विशोधयाशु मम चेतः ॥ ५३ ॥
क्षौमाम्बरपरिधाने मुक्तामणिविभूषणे मुदावासे ।
स्मितचन्द्रिकाविकसितमुखेन्दुबिम्बेऽम्बिके प्रसीद मम ॥ ५४ ॥
विद्यारूपेऽविद्याविनाशिनि विद्योतितेऽन्तरात्मविदाम् ।
गद्यैः सपद्यजातैराद्यैर्मुनिभिः स्तुते प्रसीद मम ॥ ५५ ॥
त्रिमुखि त्रयीस्वरूपे त्रिपुरे त्रिदशाभिवन्दिताङ्घ्रियुगे ।
त्रीक्षणविलसितवक्त्रे त्रिमूर्त्तिमूलात्मिके प्रसीद मम ॥ ५६ ॥
वेदात्मिके निरुक्तज्योतिर्व्याकरणकल्पशिक्षाभिः ।
सच्छन्दोभिः सन्ततक्लृप्तषडङ्गेन्द्रिये प्रसीद मम ॥ ५७ ॥
त्वच्चरणसरसि जन्मस्थितिमहितधियां (१) न लिप्यते दोषः ।
भगवति भक्तिमतस्त्वयि परमां परमेश्वरि प्रसीद मम ॥ ५८ ॥

(१) "सहितधियाम्" इति वा पाठः ।

बोधात्मिके बुधानां हृदयाम्बुजचारुरङ्गनटनपरे ।
भगवति भवभङ्गकरीं भक्तिं भद्रार्थदे प्रसीद मम ॥ ५९ ॥
वागीशीस्तवमिति यो जपार्चनाहवनवृत्तिषु प्रजपेत् ।
स तु विमलचित्तवृत्तिरिहापदि नित्यशुद्धमेति पदम् ॥ ६० ॥

॥ * ॥ इति श्रीप्रपञ्चसारे अष्टमः पटलः ॥ * ॥

---

## नवमः पटलः ।

अथ प्रवक्ष्यामि सुदुर्लभामिमां विद्यां विशिष्टां त्रिपुराभिधानाम् ।
या सा त्रिभेदापि जगत्त्रयात्मत्रिंशत्प्रकारा त्रिदशाभिवन्द्या ॥ १ ॥
त्रिमूर्त्तिसर्गाच्च पुराभवत्वात्त्रयीमयत्वाच्च पुरैव देव्याः ।
लये त्रिलोक्या अपि पूरणत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम ॥ २ ॥

व्योमेन्दुवह्न्यधरविन्दुभिरेकमन्य-
द्वत्ताच्छकेन्द्रशिखिभिः सरमार्द्धचन्द्रैः ।
अन्यद्युशीतकरपावकमन्वमन्ते-
र्व्वीजैरमीभिरुदिता त्रिपुरेति विद्या ॥ ३ ॥

वागैश्वर्य्यातिशयदतया वाग्भवं वीजमुक्तं
त्रैलोक्यक्षोभणसवशताकृष्टिदं कामराजम् ।
शाक्तं क्ष्वेलापहरणकविताकारकं वीजमेतत्
प्रोक्तं धर्म्मद्रविणसुखमोक्षप्रदं साधकानाम् ॥ ४ ॥

नाभेरधाचरणमाहृदयाच्च नाभिं
मूर्द्ध्नस्तथा हृदयमित्यमुना क्रमेण ।
वीजैस्त्रिभिर्न्यसतु हस्ततले च सव्ये
दक्षाह्वये द्वितयमप्युभयोस्तृतीयम् ॥ ५ ॥

मूर्द्धनि गुह्यहृदोरपि नेत्रत्रितये च कर्णयोरास्ये ।
अंसद्वये च पृष्ठकौर्परयोर्नाभिमण्डले च न्यस्येत् ॥ ६ ॥
वाग्भवेन पुनरङ्गुलीष्वथो विन्यसेच्च पुनरुक्तमार्गतः ।
अङ्गषट्कममुना विधाय तद्देवतां विशदधीर्व्विचिन्तयेत् ॥ ७ ॥

आताम्राकायुताभां कलितशशिकलारञ्जितस्मां त्रिनेत्रां
देवीं पूर्णेन्दुवक्त्रां विधृतजपवटीपुस्तकाभीत्यभीष्टाम् ।
पीनोत्तुङ्गस्तनार्त्तां वलिलसितविलग्नामसृक्पङ्कराज-
न्मुण्डस्रङ्मण्डिताङ्गीमरुणतरदुकूलानुलेपां नमामि ॥ ८ ॥
दीक्षां प्राप्य विशिष्टलक्षणयुजः सत्सम्प्रदायाद्गुरो-
र्लब्ध्वा मन्त्रममुं जपेत् सुनियतस्तत्त्वार्कलक्षावधि ।
स्वाहान्तैश्च नवैः पलाशकुसुमैः सम्यक् समिद्धेऽनले
मन्त्री भानुसहस्रकं प्रतिहुनेदश्वारिसूनैरपि ॥ ९ ॥
प्राणायामैः पवित्रीकृततनुरथ मन्त्री निजाधारराज-
द्योनिस्थां दिव्यरूपां प्रमुदितमनसाऽभ्यर्च्चयित्वोपचारैः ।
बद्ध्वासौ योनिमुद्रामपि निजगुदलिङ्गान्तरस्थां प्रदीप्तां
भूयो द्रव्यैस्तु शुद्धैररुणरुचिभिरप्यारभेद्बाह्यपूजाम् ॥ १० ॥

वामादिशक्तिसहितं परिपूज्य पीठं
तत्र प्रकल्प्य विधिवन्नवयोनिचक्रम् ।
योनौ निधाय कलशं त्वथ मध्यगाया-
मावाह्य तां भगवतीं प्रयजेत् क्रमेण ॥ ११ ॥
वह्नेः पुरद्वितय(१)वासवयोनिमध्य-
सम्बद्धवह्निवरुणेशसमाश्रितास्त्रि ।
देव्यर्च्चनाय मुनिभिर्व्विहितं पुराणै-
र्भूपूरपद्मसहितं (२) नवयोनिचक्रम् ॥ १२ ॥
वामा ज्येष्ठा रौद्रिका साम्बिकेच्छा
ज्ञानाभिख्या सक्रिया कुब्जिकाह्वा ।
प्रह्वी (३) चान्या स्याद्विषघ्नी सदूतिः (४)
सर्व्वानन्दा शक्तयः स्युः क्रमेण ॥ १३ ॥

---

(१) "त्रितय" इति वा पाठः । (३) "विह्वी" इति वा पाठः ।
(२) "विहितं मुनिभिः पुरैव लोकेषु दुर्ल्लभतरम्" इति वा पाठः । (४) "सतुर्य्या" इति वा पाठः ।

प्राङ्मध्ययोन्योः पुनरन्तराले सम्पूजयेत् प्राग्गुरुपादपङ्क्तिम् ।
पराभिधानामपराह्वयाञ्च परापराख्यामपि वाग्भवादिम् ॥ १४ ॥
तेनैव चाङ्गानि विदिग्दिशासु मन्त्री यथोक्तक्रमतः प्रपूज्य ।
तन्मध्ययोनेरभितः शरांश्च सम्पूजयेत् पञ्चममग्रभागे ॥ १५ ॥
सुभगां भगां भगान्ते सर्पिणीं भगमालिनीमनङ्गाह्वाम् ।
तत्पूर्व्वकुसुमसंज्ञां तदादिके चाथ मेखलामदने ॥ १६ ॥
ब्राह्मीमाहेश्वर्य्यौ कौमारी वैष्णवी च वाराही ।
इन्द्राणी चामुण्डा सचण्डिका चेति मातरः प्रोक्ताः ॥ १७ ॥

सम्पूज्य योनिषु च मातृगणं सचण्डि-
कान्तं दलेष्वभियजेदसिताङ्गकाद्यैः ।
तैर्भैरवैः सह सुगन्धकपुष्पधूप-
दीपादिकैर्भगवतीं प्रवरैर्निवेद्यैः ॥ १८ ॥

असिताङ्गाख्यो रुरुरपि चण्डक्रोधाह्वयौ तथोन्मत्तः ।
सकपालिभीषणाख्यौ संहारश्चाष्ट भैरवाः कथिताः ॥ १९ ॥
इति क्रमाद्यो विहिताभिषेकः सम्पूजयित्वा द्रविणैर्गुरुंश्च ।
जप्वार्च्चयित्वोक्ततयाथ हुत्वा युञ्जीत योगांश्च गुरूपदिष्टान् ॥ २० ॥
अच्छाभः स्वच्छभूषो धरणिमयगृहे वाग्भवं लक्षमेकं
यो जप्यात्तद्दशांशं विहितहुतविधिर्म्मन्त्रजप्ताञ्जनादिः ।
काव्यैर्नानार्थवृत्तैर्भुवनमखिलमापूरयेत् स स्वकीयै-
र्मारार्त्ता विह्वलाभिः पुनरयमनिशं सेव्यते सुन्दरीभिः ॥ २१ ॥

रक्ताकल्पारुणतरदुकूलार्त्तवालेपहृद्यो
मौनीभूतः स सद्मनि सुखनिविष्टो जपेल्लक्षमेकम् ।
वीजं मन्त्री रतिपतिमयं प्रोक्तहोमावसानं
योऽसौ लोके स सुरमनुजैः सेव्यते पूज्यते च ॥ २२ ॥

ससुरासुरसिद्धयक्षविद्याधरगन्धर्व्वभुजङ्गचारणानाम् ।
प्रमदा मदवेगतो विकीर्णाभरणाः स्रस्तदुकूलकेशजालाः ॥ २३ ॥

अतिदुःसहमन्मथव्यथाभिर्व्यथितान्तःपरितापवेपिताङ्ग्यः ।
घनघर्म्मजतोयविन्दुमुक्ताफलसक्तोरुकुचान्तबाहुमूलाः ॥ २४ ॥
रोमाञ्चकञ्चुकितगात्रलताघनोद्यदुत्तुङ्गपीनकुचकुम्भनिपीड़िताङ्ग्यः ।
औत्सुक्यभारपृथुवेपथुखेदखिन्नपादारविन्दचलनस्खलिताभिघाताः (१) ॥२५॥
मारसायकनिपातदारिता रागसागरनिमग्नमूर्त्तयः ।
श्वासमारुततरङ्गिताधरा वाष्पपूरभरविह्वलेक्षणाः ॥ २६ ॥
मस्तकारचितदोर्द्वयाञ्जलिप्राभृता हरिणशावलोचनाः (२) ।
वाञ्छितार्थकरणोद्यताश्च तद्दृष्टिपातमपि संनमन्ति (३) ताः ॥ २७ ॥

धरापवरके तथा जपतु लक्षमन्त्यं मनुं
सुशुक्लकुसुमांशुकाभरणलेपनाढ्यो वशी ।
अमुष्य वदनादनारततयोच्चरेद्भारती
विचित्रपदपद्धतिर्भवति चास्य लोको वशे ॥ २८ ॥

पलाशपुष्पैर्मधुरत्रयाक्तैर्होमं विदध्यादयुतद्वयं यः ।
सरस्वतीमन्दिरमाशु भूयात् सौभाग्यलक्ष्म्याश्च स मन्त्रजापी ॥ २९ ॥
वाजी(४)करञ्जाह्वशमीवटोत्थैः समिद्वरैर्विल्वभवप्रसूनैः ।
त्रिस्वादुयुक्तैर्हवनक्रियाशु नरेन्द्रनारीजनरञ्जनी स्यात् ॥ ३० ॥
मालतीवकुलजैर्दलद्दलैश्चन्दनाम्भसि घने निमज्जितैः ।
श्रीकरी कुसुमकैर्हुतक्रिया सैव चाशु कविताकरी मता ॥ ३१ ॥
अनुलोमविलोममन्त्रमध्यस्थितसाध्याह्वयुतं प्रजप्य मन्त्री ।
पटुसंयुतया जुहोतु वाञ्छ्या नरनारीनरपान् वशे विधातुम् ॥ १२ ॥
मधुरत्रयेण सह विल्वजैः फलैर्हवनक्रियाशु जनतानुरञ्जनी ।
अपि सैव साधकसमृद्धिदायिनी दिनशो विशिष्टकमलाकरी मता ॥३३॥
खण्डैः सुधालतोत्थैस्त्रिमधुरसिक्तैर्जुहोतु मन्त्रितमः ।
सकलोपद्रवशान्त्यै ज्वरापमृत्युप्रणोदनाय वशी ॥ ३४ ॥

(१) "स्खलिताभियाताः" इति वा पाठः ।
(२) "निभृतशावलोचनाः" इति वा पाठः ।
(३) "संलसन्ति" इति वा पाठः ।
(४) "राजी" इति पाठान्तरम् ।

फुल्लैर्विल्वप्रसूनैस्तदभिनवदलै रक्तकह्लारपुष्पैः (१)
प्रत्येकं बन्धुजीवैररुणसरसिजैरुत्पलैः कैरवाह्वैः ।
नन्द्यावर्त्तैः सकुन्दैर्नृपतरुकुसुमैः पाटलीनागपुष्पैः
स्वाद्वक्तैरिन्दिरायै प्रजुहुत दिनशः सर्पिषा पायसेन ॥ ३५ ॥
मूलाधारात् स्फुरन्तीं शिखिपुरपुटवीताम्रभां विद्युदाभा
माकान्तिन्मध्यगेन्दोः स्रवदमृतमुचा धारया मन्त्रमय्या ।
सद्यः सम्पूर्य्यमाणं त्रिभुवनमखिलं तन्मयत्वेन मन्त्री
ध्यायेन्मुच्येत वैरूप्यकदुरितजरारोगदारिद्र्यदोषैः ॥ ३६ ॥
वह्नेर्बिम्बद्वयपरिवृताधारसंस्थं समुद्य-
द्बालार्काभं स्वरगणसमावेष्टितं वाग्भवाख्यम् ।
वाण्या स्वीयाद्वदनकुहरात् सन्ततं निःसरन्त्या
ध्यायेन्मन्त्री प्रततकिरणप्रावृतं दुःखशान्त्यै ॥ ३७ ॥
हृत्पद्मस्थितभानुबिम्बविलसद्योन्यन्तरालोत्थितं
मध्याह्नार्कसमप्रभं परिवृतं वर्णैः कभाद्यान्तकैः ।
ध्यातं मन्मथबीजराजमखिलब्रह्माण्डविक्षोभकं
राज्यैश्वर्य्यविमर्द्दिनीमपि रमां दत्त्वा जगद्रञ्जयेत् ॥ ३८ ॥
मूर्द्ध्नीऽथ द्वादशान्तोदितशशधरबिम्बस्थयोनौ स्फुरन्तं
सब्बीतं व्यापकार्णैर्धवलरुचिमकारस्थितं बीजमन्त्यम् ।
ध्यात्वा सारस्वताख्यामृतजललुलितं दिव्यकाव्यादिकर्त्ता
नित्यं क्ष्वेलापमृत्युग्रहदुरितविकारान्निहन्त्याशु मन्त्री ॥ ३९ ॥
योनौ परिभ्रमितकुण्डलिरूपिणीं तां रक्तामृतद्रवमुचा निजतेजसैव ।
व्योमस्थलं सकलमप्यभिपूर्य्य तस्मिन्नावेश्य मङ्क्षु वशयेद्वनिता नरांश्च ॥ ४० ॥
गुह्यस्थितं वा मदनस्य बीजं जवारुणं रक्तसुधां स्रवच्च ।
विचिन्त्य तस्मिन् विनिवेश्य साध्यं वशीकरोत्येव विदग्धलोकः ॥ ४१ ॥

---

(१) "वातारिपुष्पैः" इति वा पाठः ।

अन्त्यं बीजमथेन्दुकुन्दविशदं संचिन्त्य चित्ताम्बुजे
तद्भूतां धृतपुस्तकाक्षवलयां देवीं मुहुस्तन्मुखात् ।
उद्यन्तं निखिलाक्षरं निजमुखेनानारतस्रोतसा
निर्यान्तञ्च निरस्तसंसृतिभयो भूयात् स वाग्वल्लभः ॥ ४२ ॥

सङ्क्षेपतो निगदिता त्रिपुराभिधाना विद्या सजापहवना सविधानपूजा ।
सोपासना च सकलाभ्युदयप्रसिद्ध्यै वाणीरमाप्तिविषये जगतो हिताय॥४३॥

विद्येशीं त्रिपुरामिति प्रतिभजेद्यो वा जपेन्नित्यशः
तद्वक्त्रादथ नूतनार्थविशदा वाणी मुदा निःसरेत् ।
सम्पत्त्या नृपनिन्दिनी ततयशःपूरा भवेदिन्दिरा
तस्यासौ प्रतियाति सर्व्वमुनिभिः संप्रार्थनीयं पदम् ॥ ४४ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे नवमः पटलः ॥ * ॥

---

# दशमः पटलः ।

अथाभिवक्ष्ये सकलप्रपञ्चमूलात्मिकायाः प्रकृतेर्यथावत् ।
मन्त्रं सहाङ्गं सहुताभिषेकं जपार्चनाद्यं सकलार्थसिद्ध्यै ॥ १ ॥
घनवर्त्मकृष्णगतिशान्तिबिन्दुभिः कथितः परप्रकृतिवाचको मनुः ।
दुरितापहोऽर्थसुखधर्ममोक्षदो भजतामशेषजनरञ्जनक्षमः ॥ २ ॥
शक्तिः स्यादृषिरस्य तु गायत्री चोदिता मनोश्छन्दः ।
बोधस्वरूपवाचां संविक्प्रोक्ता च देवता गुरुभिः ॥ ३ ॥
नेत्रकरणर्तुदिनकरभुवनविकारस्वराग्निबिन्दुयुजा ।
व्योम्ना षडङ्गकॢप्तिर्जातिविभिन्नेन चापि संप्रोक्ता ॥ ४ ॥

अग्नीन्दुयोगविकृता लिपयो हि सृष्टा-
स्ताभिर्विलोमपठिताभिरिदं शरीरम् ।
भूतात्मकं त्वगसृगादियुतं समस्तं
संव्यापयेन्निशितधीर्विधिना यथावत् ॥ ५ ॥

अन्त्यावुष्मस्वमून् वादिषु मलिपिषु तांस्तांश्चतुर्ष्वेगवर्ग-
ष्वेतानऽस्यऽस्यदस्तद्गति तदपि परेषु क्रमेणावचिन्त्य ।
संहृत्य स्थानयुक्तं क्षपितसकलदेहो ललाटस्थितान्तः (१)
प्राप्तिव्याप्तद्विसप्ताधिकभुवनतलो याति मद्भावमेव ॥ ६ ॥

मूलाधारात् स्फुरिततड़िदाभा प्रभासूक्ष्मरूपोद्-
गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ।
सौषुम्नाध्वाचरणनिपुणा सा सविन्नानुबद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयेत् सार्द्धसोमात् ॥ ७ ॥

---

(१) "ललाटस्थितेऽन्तः" इति वा पाठः ।

शिरसि निपतिता या विन्दुधारा सुधाया
भवति लिपिमयी सा ताभिरङ्गं सुखाद्यम् ।
विरचयतु समस्तं पातितान्तश्च तेज-
स्यनल इव घृतस्योद्दीपयेदात्मतेजः ॥ ८ ॥
संहृत्य चोत्पाद्य शरीरमेवं तेजोमयं व्याप्तसमस्तलोकम् ।
सङ्कल्पय शक्त्यात्मकमात्मरूपं तच्चिह्नमात्मन्यथ संदधीत ॥ ९ ॥
उद्यद्भास्वत्समाभां विजितनवजवामिन्दुखण्डावबद्ध- (१)
द्योतन्मौलिं त्रिनेत्रां विविधमणिलसत्कुण्डलां पद्मगाञ्च ।
हारग्रैवेयकाञ्चीगुणमणिवलयाद्यैर्विचित्राम्बराढ्या-
मम्बां पाशाङ्कुशेष्टाभयकरकमलामम्बिकां तां नमामि ॥ १० ॥
धातू द्वौ स्तो रक्षणव्यापकार्थौ पाद्योऽस्याद्यस्तत्प्रभावस्तयोश्च ।
सर्व्वं संरक्ष्याथ सर्व्वात्मना यो व्याप्नोत्यंशः स्यादसौ पाशवाची ॥ ११ ॥
अं स्यादात्मा कुर्धरा कुस्तनुर्व्वा भागार्थः स्याच्छोऽथवा वृत्तिवाची ।
भूयश्चेद्भूतान्यन्यथा चेच्छरीराण्याकृष्यात्मन्याहरेदङ्कुशाख्यः ॥ १२ ॥
स्मृते यथा संसृतिचक्रचङ्क्रमोद्भवाद्वनापाय (२) समुत्थितादपि ।
वियोजयत्यात्मतनुं नरं भयात्तथाऽभयस्याभयसंज्ञिता विभोः ॥ १३ ॥
मुख्यार्थवाची वरशब्द उक्तः स्याद्वाञ्छितार्थश्च वराभिधानः ।
मुख्यन्त्वभीष्टं स्मृतिमात्रकेण ददाति योऽसौ वरदोऽवगम्यः ॥ १४ ॥
दीक्षाकृत्ये पुरोक्ते रचयतु विधिवन्मण्डलं मण्डपे त-
द्वृत्तं युक्तञ्च कान्त्या त्रिगुणितविलसत्कर्णिकं वर्णवीतम् ।
आवीतं केसरेष्वारचितहरिहरार्णैश्च मध्ये समाये
स्तैरग्रे माययाढ्यं कमलमथ वह्निः प्रोक्तचिह्नैरुपेतम् ॥ १५ ॥

---

(१) "इन्दुखण्डावनद्ध" इति वा पाठः ।
(२) "वनापाय" इति वा पाठः ।

शक्त्याविःसाध्यमिन्द्रानिलनिर्ऋतिगवीजाभिवद्धं पुरोऽग्ने-
स्तत्कोणोल्लासिमायं हरिहरविलसद्गण्डमेभिः समायैः ।
वर्णैश्चावेष्टितं तत्त्रिगुणितमिति विख्यातमेतत् सुयन्त्रं
स्यादायुष्यञ्च वश्यं धनकरममितश्रीप्रदं कीर्त्तिदञ्च ॥ १६ ॥
हृल्लेखाख्यां गगनां रक्तां च करालिकां महोच्छुष्माम् ।
मूर्द्धनि वदने हृदये गुह्ये पदयोर्न्यसेत्तदङ्गैश्च ॥ १७ ॥
गायत्रीं न्यसतु गले स्तने तु सव्ये सावित्रीं पुनरपरे सरस्वतीञ्च ।
सव्येऽंसे सरसिजसम्भवं मुकुन्दं हृद्देशे पुनरपरांसके शिवञ्च ॥ १८ ॥
अलिकांसपार्श्वकुक्षिषु पार्श्वांसापरगलहृत्सु च क्रमशः ।
ब्रह्माण्याद्या विधिवन्न्यस्तव्या मातरोऽष्ट मन्त्रितमैः ॥ १९ ॥
सजया विजया तथा जिताह्वया चापराजिता नित्या ।
तदनु विलासिनीदोग्ध्र्यौ साघोरा मङ्गला नव प्रोक्ताः ॥ २० ॥
एवं संपूज्य पीठं तदनु नव घटान् पञ्च वा कर्णिकायां
पत्राग्रेषु न्यसेत् काञ्चनरजतताम्रोद्भवान्मार्त्तिकान् वा ।
एकं वा कर्णिकायां सुमतिरथ विनिःक्षिप्य कुम्भं यथावत्
संपूर्य्यावाहयेत्त्रिष्वपि विधिषु पुनर्व्वक्ष्यमाणक्रमेण ॥ २१ ॥
मधुना महता रवेण साकं विधिना मध्यगतं प्रपूर्य्य कुम्भम् ।
अभिबाह्य कलाः प्रवेश्यीत प्रवराभ्यामथ तं नवांशुकाभ्याम् ॥ २२ ॥
ऐन्द्रं घृतेन यमदिक्प्रभवञ्च दध्ना क्षीरेण वारुणमथो तिलजेन सौम्यम् ।
क्षीरद्रुचर्म्मदशमूलकपुष्पसिद्धक्वाथेन कोणनिहितानपि पूरयेच्च ॥ २३ ॥
मूत्रेणैन्द्रं गोमयेनापि याम्यं क्षीरेणाप्यं सौम्यजञ्चैव दध्ना ।
मध्यप्रोत्थं सर्पिषा पञ्च कुम्भाः स्युस्त्वेवं पूरणीयाः क्रमेण ॥ २४ ॥
गोमूत्रगोमयोदकपयोदधिघृतांशकाः क्रमात् प्रोक्ताः ।
एकार्द्धधातुसत्त्वाद्येके सर्व्वाणि वा समानि स्युः ॥ २५ ॥
तारभवाभिरथर्ग्भिः क्रमेण संयोजयेत् पञ्चगव्यानि ।
आत्माष्टाक्षरमन्त्रैरथवा योज्यानि पञ्चभिः पञ्च ॥ २६ ॥

यद्येककलशक्लृप्तौ विधिरपि पञ्चाशदोषधिक्वाथैः।
पूरयतु पञ्चभिर्व्वा गव्यैस्तोयात्मकैऽष्टगन्धाद्भिः॥ २७॥
अत्रोत्तरस्यान्दिशि पङ्कजे च पलाशचर्म्मक्वथितैः पयोभिः।
सम्पूरणीयः कलशो यथावत् सुवर्णवस्त्रादियुतः सुशुद्धः॥ २८॥
द्वारेषु मण्डपस्य द्वौ द्वौ कुम्भौ सुशुद्धजलपूर्णौ।
संस्थाप्य च वसनाद्यैः प्रवेष्टयित्वा हि पूजनीयाः स्युः॥ २९॥
ऊर्द्धेन्द्रयाम्यसौम्यप्रत्यग्दिक्षु च भूतवर्णकाः क्रमशः।
हृल्लेखाद्यास्तदनु च पूर्व्ववदङ्गानि पूजनीयानि॥ ३०॥
गायत्रीं शतमखजे निशाचरोत्थे
सावित्रीं पवनगते सरस्वतीञ्च।
ब्रह्माणं हुतभुजि वारुणे च विष्णुं
वीजेऽस्त्रे (१) समभियजेत् तथेशमैशे॥ ३१॥
रक्ता रक्ताकल्पा चतुर्म्मुखी कुण्डिकाक्षमालेऽब्जे।
दधती प्राग्वीजस्था गायत्री तादृशोऽग्निगो ब्रह्मा॥ ३२॥
अरिदरगदाब्जहस्ता किरीटकेयूरहारसम्भिन्ना।
निशिचरवीजसमुत्था सावित्री वरुणगस्तथा विष्णुः॥ ३३॥
टङ्काक्षाभयवरान् दधती च त्रीक्षणेन्दुकलितजटा।
वाणी वायव्यस्था विशदाकल्पा तथेश्वरस्त्वैशे॥ ३४॥
ब्रह्माण्याद्यास्तद्वहिरनन्तरं वासवादिकाशैशाः।
पूज्याः पूर्व्वप्रोक्तैरुपचारैः सम्यगिति निजेष्टाप्त्यै॥ ३५॥
यदि नव कलशास्तेष्वथ संपूज्या मातरोऽष्ट दिक्क्रमशः।
हृल्लेखाद्याः पूज्या मध्यादिषु पञ्च चेद्भवन्ति घटाः॥ ३६॥
प्रथमं घृतजं ततः कषायं दधि पश्चात् क्वथितं पयः कषायम्।
अथ तैलकषायकौ मधूत्थं द्विजहृच्चात् क्वथितं ततोऽभिषिञ्चेत्॥ २७॥

---

(१) "वीजैः स्वैः" इति वा पाठः।

द्वारगकुम्भघृतैरथ सलिलैः पुनरन्तरान्तरा सेकम् ।
कुर्य्यान्मुखकरचरणक्षालनमपि साचमादिकं मन्त्री ॥ ३८ ॥
विधिवदिति कृताभिषेको द्वात्रिंशल्लक्षमथ जपेन्मन्त्रम् ।
निजकरदत्तार्घ्यामृतजलपोषितभानुमत्प्रभोऽनुदिनम् ॥ ३९ ॥

भूत्वा शक्तिः स्वयमथ दिनेशेन्दुवैश्वानराणा-
मैक्यं कुर्व्वन् प्रणवमनुना शक्तिबीजेन भूयः ।
आकृष्यान्तर्व्वहिरपि समाधाय बुद्धैव तेजो
जप्यान्मन्त्रं ज्वलनहुतशिष्टान्नभुक् प्रोक्तसंख्यम् ॥ ४० ॥

अथ तु हविष्यप्राशी नक्ताशी वा जपेन्मनुञ्चैवम् ।
परिपूर्णायां नियमितजपसंख्यायां समारभेद्धोमम् ॥ ४१ ॥
जपाद्दशांशं जुहुयादथाष्टद्रव्यैर्गुड़क्षौद्रघृतावसिक्तैः ।
वर्णौषधीसिद्धजलाभिषिक्तं कृत्वा द्विजानभ्यवहारयेच्च ॥ ४२ ॥
ततोऽस्य प्रत्ययास्त्वेवं जायन्ते जपतो मनुम् ।
अधिष्ठितं निश्चदीपं निस्तमिस्रं गृहं भवेत् ॥ ४३ ॥
ततः कृत्वा जपन्न्यासं समुपासीत शक्तितः ।
युक्तात्मा नित्ययोगेन (१) प्रागुक्तविधिनार्च्चयेत् ॥ ४४ ॥
अश्वत्थविप्राङ्घ्रिपविल्वनाम्नां तर्कारिकप्लक्षकसेव्यकानाम् ।
प्रसारणीकाश्मरिरोहिणीनामुडुम्बरीपाटलिडुण्डुकानाम् ॥ ४५ ॥
पलं पलार्द्धन्त्वथ कर्षमर्द्धं (२) तेषान्तु भागः कथितः क्रमेण ।
एतैः सृतेनाथ जलेन चासौ संपूरणीयः कलशो यथावत् ।
प्रत्यब्दसेकान्नविता शतायुर्मेधेन्द्रियावान् रहितश्च रोगैः ॥ ४६ ॥
अर्काभस्तेजसाऽसौ भवति नलिनजा सन्ततं किङ्करी स्या-
द्रोगा नश्यन्ति दृष्ट्वा तमथ च धनधान्याकुलं तत्समीपम् ।
देवा नित्यं नमोऽस्मै विदधति फणिनो नैव दंशन्ति पुत्राः
सम्पन्नाः स्युः सपुत्रास्तनुविपदि परं धाम विष्णोः स भूयात् ॥ ४७ ॥

(१) "युक्तात्मानन्ययोगेन" इति वा पाठः । (२) "कर्षमात्रम्" इति वा पाठः ।

शक्तिप्रशस्तसाध्यं हरशरकलमायावृतं वह्निगेह-
द्वन्द्वास्त्रिप्रान्तमायं प्रतिविवरलसच्छक्तिवद्वं वहिश्च ।
कोणोद्यद्दण्डदण्डिचिलिपिहरिहरावद्धगण्डाविलोमा-
र्णावीतं कोर्यूगाष्टोदरवृहरिचिन्ताश्मकं षड्गुणाख्यम् ॥ ४८ ॥

षडङ्गुलप्रमाणेन वर्त्तुलं कर्त्तुरालिखेत् ।
षडङ्गुलावकाशेन तद्बहिश्च प्रवर्त्तयेत् ॥ ४९ ॥
वर्त्तुलं तावता भूयस्तद्बहिश्च तृतीयकम् ।
मध्यवर्त्तुलमध्ये तु हृल्लेखावीजमालिखेत् ॥ ५० ॥
द्वितीयवर्त्तुलाश्लिष्टमीषच्छ्लिष्टषडस्रकम् ।
पुटितं मण्डलं वह्नेरस्पृशन्मध्यवर्त्तुलम् ॥ ५१ ॥
इन्द्राग्निरक्षोवरुणवायूशान्तास्त्रिकं लिखेत् ।
षट्सु कोणान्तरालेषु हृल्लेखाषट्कमालिखेत् ॥ ५२ ॥
एकैकान्तरितास्तास्तु सम्बध्युरितरेतरम् ।
शिखाभिरन्तराभिस्तु वाह्यावाह्याभिरान्तराः ॥ ५३ ॥
मध्यवर्त्तुलसंस्थाया हृल्लेखायाः कपोलयोः ।
अधरे साध्यनामार्णं साधकस्योत्तरे लिखेत् ॥ ५४ ॥
अन्तराग्निश्रियोः कर्म्म साधकांशे समालिखेत् ।
हरमायाः पञ्चकलः स्युर्व्वहिर्गर्भवर्त्तुलम् ॥ ५५ ॥
तद्बहिः शवमायाश्च कलमायाश्च तद्बहिः ।
लिखेन्मायां विन्दुमतीं वह्नेः कोणेषु षट्स्वपि ॥ ५६ ॥
वह्नेः कोणत्रये श्रीमत्पञ्चीये त्रितयं लिखेत् ।
शक्तिश्रीकामवीजानां सदण्डं साधकार्णवत् ॥ ५७ ॥
वह्नेस्तु वह्निपञ्चीये तान्येवादण्डवन्ति च ।
ससाध्यनामवर्णानि स्पष्टनिष्ठानभाञ्जि च ॥ ५८ ॥
वाह्यरेखामन्तरा स्युर्व्वर्णाः क्रमगताः शुभाः ।
तद्बहिः प्रतिलोमाश्च ते स्युर्लेखकपाटवात् ॥ ५९ ॥

ततो विदर्भितं भूमेर्म्मण्डलद्वयमालिखेत्।
महादिक्षु नृसिंहार्णं चिन्तारत्नाश्रिताश्रिकम्॥ ६०॥
वह्निः षोड़शशूलाङ्कं शोभनं व्यक्तवर्णवत्।
एतद्‌यन्त्रं समालिख्य पद्ममारचयेत्ततः॥ ६१॥
रुचिरं द्वादशदलं षट्त्रिंशत्केसरोज्ज्वलम्।
त्रिवृत्तराशिवीथ्याद्यैः पार्थिवान्तञ्च मण्डलम्॥ ६२॥
पूर्व्वोक्तलक्षणोपेतं शुभं दृष्टिमनोहरम्।
एवं कृते षड़्गुणिते मण्डले सुमनोहरे।
प्राग्वत् सङ्कल्प्य कलसमर्च्चयेत् सुसमाहितः॥ ६३॥
अभ्यर्च्च्य पीठं नवशक्तिकान्तमङ्गानि वीजेषु च षट्सु भूयः।
गायत्रसावित्रसरस्वतीश्च यजेदथ श्रीरतिपुष्टिसंज्ञाः॥ ६४॥
ब्रह्माणमथ च विष्णुं महेश्वरं धनदमदनगणनाथान्।
अभ्यर्च्चयेत् षट्स्वपि वह्नेः कोणेषु तद्बहिः क्रमशः॥ ६५॥
रक्तामनङ्गकुसुमां कुसुमातुरां च
नित्यामनङ्गमदनां मदनातुराख्याम्।
गौरीन्तथैव गगनां गगनस्य रेखां
पद्मां भवप्रमथिनीं शशिशेखराञ्च॥ ६६॥
एता द्विषट् प्रतिदलं प्रतिपूज्य शक्ती-
स्तद्बाह्यतो यजतु मातृगणं क्रमेण।
इन्द्रादिकान् वहिरतश्च तदायुधानि
सम्पूज्य पूर्व्वविधिनाऽमु(१)मथाभिषिञ्चेत्॥ ६७॥
योऽमुमर्च्चयति मुख्यविधानं सिद्धशक्तिरपि सजपहोमैः।
स श्रियो निलयनं त्रिदशानां वन्द्यतां व्रजति विष्णुसमानः॥ ६८॥

॥ * ॥ इति श्रीप्रपञ्चसारे दशमः पटलः॥ * ॥

---

(१) "अमुम्" इत्यत्र "स्वम्" इति पाठान्तरम्।

# एकादशः पटलः ।

अथ वक्ष्ये संग्रहतो द्वादशगुणिताख्यमहायन्त्रवरम् ।
सम्पूज्य येन शक्तिं भुक्तेर्मुक्तेर्व्रजेन्नरोऽनुभवम् ॥ १ ॥
व्याहृत्या वीतशक्तिज्वलनपुरयुगद्वन्द्वसन्ध्युत्थशक्त्या-
वीतं कोणोत्थदुर्वीजकमनु च कपोलात्तगायत्रिमन्त्रम् ।
आग्नेय्यावीतमर्णैर्वृतमनु विगतैर्भूपुराभ्याञ्च रन्ध्रे
त्रौं चिन्तारत्नकं द्वादशगुणितमिदं यन्त्रमिष्टार्थदायि ॥ २ ॥
पूर्व्वोक्तमानक्लृप्त्या मन्त्री त्रितयं विलिख्य वृत्तानाम् ।
विलिखेदन्तर्व्वर्त्तुलमनु शक्तिं स्पष्टविन्दुनिष्ठानाम् ॥ ३ ॥
द्वादशमध्यमवर्त्तुलरेखाया वहिरालिखेच्च शक्तीनाम् ।
हरियमवरुणधनाधिपदिक्षु द्वे द्वे च ताः क्रमेण स्युः ॥ ४ ॥
ईशाग्निनिर्ऋतिमरुतां दिक्ष्वेकैकं विलिख्य भूयश्च ।
वीजान्तरालनिर्गतशूलाङ्कितकोणषट्कयुगमग्नेः ॥ ५ ॥
मण्डलयुगयुगलं स्यादस्पृशदान्तरितवर्त्तुलं विशदम् ।
शक्तिं प्रवेष्टयेच्च प्रतिलोमव्याहृतिभिरन्तःस्थाम् ॥ ६ ॥
रविकोणेषु दुरन्तां मायां विलिखेदथात्र विन्दुमतीम् ।
एकैकान्तरितास्ताः परस्परं शक्तयश्च सम्बध्युः ॥ ७ ॥
गायत्रीं प्रतिलोमतः प्रविलिखेद्दङ्कैः कपोलं वहि-
र्द्वे द्वे चैव लिपी वहिश्च रचयेद्भूयस्तथा त्रैष्टुभम् ।
वर्णान् प्रानुगतांश्च भूपुरयुगे सिंहाख्यचिन्तामणी-
लिख्याद्यन्त्रमशेषदुःखशमनायोक्तं पुरा देशिकैः ॥ ८ ॥
वहिरथ षोड़शपत्रं वृत्तविचित्रं च राशिवीथियुतम् ।
विरचय्य मण्डलं पुनरत्र यथोक्तं निधापयेत् कलशम् ॥ ९ ॥

आदावङ्गावरणमनु हृल्लेखिकाद्याश्चतस्रः
ब्राह्म्याद्याः षोड़श च विकृतीर्द्वन्द्वसंख्याः क्रमेण ।
सार्द्धं भूयश्चतसृभिरथो षष्टिभिर्लोकपालै-
र्व्वज्राद्यैरष्टममपि समभ्यर्च्चयेद्भक्तिनम्रः ॥ १० ॥
कराली विकराली च उमा देवी सरस्वती ।
दुर्गा शची उषा लक्ष्मी रतिः स्मृतिधृती तथा ॥ ११ ॥
श्रद्धा मेधा मतिः कान्तिरार्य्या षोड़श शक्तयः ।
विद्याह्रीपुष्टयः प्रज्ञा सिनीवाली कुहुस्तथा ॥ १२ ॥
रुद्रवीर्य्या प्रभा नन्दा पोषणी ऋद्धिदा शुभा ।
कालरात्रिर्म्महारात्रिर्भद्रकाली कपालिनी ॥ १३ ॥
विकृतिर्दण्डिमुण्डिन्यौ सेन्दुखण्डा शिखण्डिनी ।
निशुम्भशुम्भमथिनी महिषासुरमर्द्दिनी ॥ १४ ॥
इन्द्राणी चैव रुद्राणी शङ्करार्द्धशरीरिणी ।
नारी नारायणी चैव त्रिशूलिन्यपि पालिनी ॥ १५ ॥
अम्बिका ह्लादिनी चैव द्वात्रिंशच्छक्तयो मताः ।
पिङ्गलाक्षी विशालाक्षी समृद्धिर्बुद्धिरेव च ॥ १६ ॥
श्रद्धा स्वाहा स्वधाख्या च मायाभिख्या वसुन्धरा ।
त्रिलोकधात्री गायत्री सावित्री त्रिदशेश्वरी ॥ १७ ॥
सुरूपा बहुरूपा च स्कन्दमाताऽच्युतप्रिया ।
विमला सामला चैव अरुणी वारुणी (१) तथा ॥ १८ ॥
प्रकृतिर्व्विकृतिः सृष्टिः स्थितिः संहृतिरेव च ।
सन्ध्या माता सती हंसी मर्द्दिका (२) वज्रिका परा ॥ १९ ॥
देवमाता भगवती देवकी कमलासना ।
त्रिमुखीसप्तमुख्यौ च सुरासुरविमर्द्दिनी ॥ २० ॥

---

(१) "आरुणी" इति पाठान्तरम् ।     (२) "मर्द्दिनी" इति पाठान्तरम् ।

सुलम्बोष्ठ्यूर्द्ध्वकेश्यौ च बहुशिश्ना वृकोदरी ।
रथरेखाह्वया चैव शशिरेखा तथाऽपरा ॥ २१ ॥
पुनर्गगनवेगाख्या वेगा च पवनादिका ।
भूयो भुवनपालाख्या तथैव मदनातुरा ॥ २२ ॥
अनङ्गाऽनङ्गमदना भूयश्चानङ्गमेखला ।
अनङ्गकुसुमा विश्वरूपाऽसुरभयङ्करी ॥ २३ ॥
अक्षोभ्यासत्यवादिन्यौ वज्ररूपा शुचिव्रता ।
वरदा चैव वागीशी चतुःषष्टिः प्रकीर्त्तिताः ॥ २४ ॥

इष्ट्वा यथोक्तमिति तं कलशं निजं वा
पुत्रं तथाप्तमपि शिष्यमथाभिषिञ्चेत् ।
आस्तिक्ययुक्तमथ सत्यरतं वदान्यं
विप्रप्रियं कुलकरञ्च नृपोत्तमं वा ॥ २५ ॥

विधानमेतत् सकलार्थसिद्धिकरं परं पावनमिन्दिरादम् ।
आयुःप्रदं वश्यकरं रिपूणां भुक्तिप्रदं मुक्तिफलप्रदञ्च ॥ २६ ॥

पाशाङ्कुशमध्यगया शक्त्याथ जपार्च्चनहुतादियुतम् ।
वक्ष्ये यन्त्रविधानं त्रैलोक्यप्राभृतायमानमिदम् ॥ २७ ॥

अष्टाशात्तार्गलाविर्ह्लयवरयुतापूर्व्वपाश्चात्यषट्कं
कोणोद्यत्स्वाङ्गसाष्टाक्षरयुगयुगलाष्टाक्षराख्यं वहिश्च ।
मायोपेतात्मयुग्मस्वरमिलितलसत्केसरं साष्टपत्रं
पद्मं तन्मध्यपङ्क्तित्रितयपरिलसत्पाशशक्त्यङ्कुशार्णम् ॥ २८ ॥

पाशाङ्कुशावृतमनुप्रतिलोमकैश्च वर्णैः सरोजपुटितेन घटेन चापि ।
आवीतमिष्टफलभद्रफटं(१) तदेतद्यन्त्रोत्तमन्त्विति घटार्गलनामधेयम् ॥२९॥

प्राक्प्रत्यगर्गले ह्लमथ पुनराग्नेयमारुते च ह्रयम् ।
दक्षोत्तरे ह्रार्णं नैर्ऋतशैवे ह्रं द्विपङ्क्तिशो विलिखेत् ॥ ३० ॥

---

(१) "भद्रघटम्" इति पाठान्तरम् ।

विलिखेच्च कर्णिकायां पाशाङ्कुशसाध्ययुतां शक्तिम् ।
अभ्यन्तराष्टकोष्ठेष्वङ्गान्यवशेषितेषु चाष्टार्णौ ॥ ३१ ॥
कोष्ठेषु षोड़शस्वथ षोड़शवर्णं मनुं तथा मन्त्री ।
पद्मस्य केसरेषु च युगस्वरात्मान्वितान्तथा मायाम् ॥ ३२ ॥
एकैकेषु दलेषु त्रिशस्त्रिशः कर्णिकागतान्मन्त्रान् ।
पाशाङ्कुशवीजाभ्यां प्रवेष्टयेद्बाह्यतश्च नलिनस्य ॥ ३३ ॥
अनुलोमविलोमगतैः प्रवेष्टयेदक्षरैश्च तद्बाह्ये ।
तदनु घटेन सरोजस्थितेन तद्वत्कोऽम्बुजञ्च लिखेत् ॥ ३४ ॥
विन्दन्तिका प्रतिष्ठा सन्दिष्टा पाशवीजमिति मुनिभिः ।
निजभूईहनाप्यायिनी शशधरखण्डान्वितोऽङ्कुशो भवति ॥ ३५ ॥
पाशश्रीशक्तिस्मरमन्मथशक्तीन्दिराङ्कुशाश्चेति ।
एकं कामिनि रञ्जिनि ठद्वयमपरन्त्विहाष्टवर्णं स्यात् ॥ ३६ ॥
अथ गौरि रुद्रदयिते योगेश्वरि सकवचास्त्रठद्वितयैः ।
वीजादिकमिदमुक्तं शाक्तेयं षोड़शाक्षरं मन्त्रम् ॥ ३७ ॥
इति कृतदलसुभूषितमतिरुचिरं लोकनयनचित्तहरम् ।
कृत्वोज्ज्वलमथ मण्डलमपि पीठाद्यं पुरेव परिपूज्य ॥ ३८ ॥
पूर्व्वप्रोक्तैः क्वाथैरेकेनापूर्य्य पूजयेत् कलशम् ।
हृल्लेखाद्यङ्गाद्यौ मातृसुरेशादिकौ सकुलिशादौ ॥ ३९ ॥
एवं संपूज्य देवीं कलशमनु शुभैर्गन्धपुष्पादिकैस्तां
दध्याज्यक्षौद्रसिक्तैस्त्रिशतमथ पृथक् दुग्धवीरुत्समिद्भिः ।
हुत्वा दत्त्वा सुवर्णांशुकवसुधरणीर्दक्षिणार्थं द्विजेभ्यः
संपूज्याचार्य्यवर्य्यं वसुभिरमलधीः संयतात्माभिषिञ्चेत् ॥ ४० ॥
इति कृतकलशोऽयं सिच्यते येन पुंसा
स भवति कविरेनं नित्यमालिङ्गते श्रीः ।
धनदिनरजनीशैस्तुल्यतेजा महिम्ना
निरुपमचरितोऽसौ देहिनां स्यात् पुरोगः ॥ ४१ ॥

जपेच्चतुर्विंशतिलक्षमेवं सुयन्त्रितो मन्त्रवरं यथावत् ।
हविष्यभोजी परिपूर्णसंख्ये जपे पुनर्होमविधिर्विधेयः ॥ ४२ ॥
पयोद्रुमाणाञ्च समित्सहस्रषट्कं दधिक्षौद्रघृतावसिक्तम् ।
तिलैश्च तावज्जुहुयात्पयोक्तैर्द्विजोत्तमानभ्यवहारयेच्च (१) ॥ ४३ ॥
गुरुमपि परिपूज्य काञ्चनाद्यैर्जपतु च मन्त्रमथो सहस्रमात्रम् ।
भजतु च दिनशोऽमुमर्चनाया विधिविहितं विधिमादरेण भूयः ॥ ४४ ॥
संक्षेपतो निगदितो विधिरर्चनायाः
शक्तेरयं सकल (२) संसृतिमोचनाय ।
कान्त्यै श्रियै च यशसे जनरञ्जनाय
सिद्धैः प्रसिद्धमहसाऽस्य परस्य धाम्नः ॥ ४५ ॥
गजमृगमदकाश्मीरैर्मन्त्रितमः सुरभिरोचनोपेतैः ।
विलिखेदलक्तकरसालुलितैर्यन्त्राणि सकलकार्य्यार्थी (३) ॥ ४६ ॥
एभिर्विधानैर्भुवनेश्वरीं तां समर्च्य सिद्धैः तु जपंश्च मन्त्री ।
स्तुत्यानया स्तौतु सदा समग्रप्रीत्यै समस्तार्त्तिविभञ्जिकायाः ॥ ४७ ॥
प्रसीद प्रपञ्चस्वरूपे प्रधाने प्रकृत्यात्मिके प्राणिनां प्राणसंज्ञे ।
प्रणोतुं प्रभो प्रारभे प्राञ्जलिस्त्वां प्रकृत्याऽप्रतर्क्यप्रकामप्रवृत्ते ॥ ४८ ॥
स्तुतिर्वाक्यबद्धा पदात्मैव वाक्यं पदन्त्वक्षरात्माऽक्षरं त्वं महेशि ।
ध्रुवं त्वां त्वमेवाक्षरैस्त्वन्मयैस्तौष्यतस्त्वन्मयी वाक्प्रवृत्तिर्यतः स्यात् ॥ ४९ ॥
अजाधोक्षजत्रीक्षणाश्चापि रूपं परं नाभिजानन्ति मायामयं (४) ते ।
स्तुवन्तीशितां त्वाममी स्थूलरूपां तदेतावदस्त्विहयुक्तं ममापि ॥ ५० ॥

---

(१) "वाञ्छा पटुयुतया सपापशपक्षयङ्कुशेन मन्त्रेण ।
स्वाहान्तया जुहूर्वंश्च्युर्वशीमथो वशी वशयेत् ॥"
इत्यधिकः श्लोकः पुस्तकान्तरे दृश्यते ।

(२) "शक्तेरिमं भजतु" इति पाठान्तरम् ।

(३) "कार्य्यार्थम्" इति पाठान्तरम् ।

(४) "मायामये" इति पाठान्तरम् ।

नमस्ते समस्तेऽपि विन्दुस्वरूपे नमस्ते परत्वेन (१) तत्त्वाभिधाने ।
नमस्ते महत्त्वं प्रपन्ने प्रधाने नमस्ते त्वहङ्कारतत्त्वस्वरूपे ॥ ५१ ॥
नमः शब्दरूपे नमो व्योमरूपे नमः स्पर्शरूपे नमो वायुरूपे ।
नमो रूपतेजोरसाम्भःस्वरूपे नमस्तेऽस्तु गन्धात्मिके भूस्वरूपे ॥ ५२ ॥
नमः श्रोत्रचर्माक्षिजिह्वाख्यनासास्यवाक्पाणिपत्पायुसोपस्थरूपे ।
नमो बुद्ध्यहङ्कारचित्तस्वरूपे (२) विरूपे नमस्ते विभो विश्वरूपे ॥ ५३ ॥
रवित्वेन् भूत्वान्तरात्मा दधासि प्रजाश्चन्द्रमस्त्वेन पुष्णासि भूयः ।
दहस्यग्निभूर्त्तिं वहन्त्याहुतिं वा महादेवि तेजस्त्वयं त्वत्त एव ॥ ५४ ।
चतुर्व्वक्त्रयुक्तालसद्धंसवाहा रजःसंश्रिता ब्रह्मसंज्ञां दधाना ।
जगत्सृष्टिकार्य्या जगन्मातृभूते परं त्वत्पदं ध्यायसीशि त्वमेव ॥ ५५ ॥
विराजत्किरीटा लसच्छङ्खचक्रा वहन्ती च नारायणाख्यां जगत्सु ।
गुणं सत्त्वमास्थाय विश्वस्थितिं यः करोतीह सोऽंशोऽपि देवि त्वमेव ॥५६॥
जटाबद्धचन्द्राहिगङ्गां त्रिनेत्रां जगत्संहरन्तीच्च कल्पावसाने ।
तमःसंश्रिता रुद्रसंज्ञां दधाना वहन्ती परश्वक्षमाले विभासि ॥ ५७ ॥
सचिन्ताक्षमाला सुधाकुम्भलेखाधरा त्रीक्षणार्द्धेन्दुराजत्कपर्द्दा ।
सुशुक्लांशुकाकल्पदेहा सरस्वत्यपि त्वन्मयैवेशि वाचामधीशा ॥ ५८ ॥
लसच्छङ्खचक्रा चलत्खड्गभीमा नदत्सिंहवाहा ज्वलत्तुङ्गमौलिः ।
द्रवद्दैत्यवर्गा स्तुवत्सिद्धसङ्घा त्वमेवेशि दुर्गापि सर्गादिहीने ॥ ५९ ॥
पुरारातिदेहार्द्धभागा भवानी गिरीन्द्रात्मजात्वेन यैषा विभाति ।
महायोगिवन्द्या महेशा सुनाथा महेश्यम्बिका तत्त्वतस्त्वन्मयैव ॥ ६० ॥
लसत्कौस्तुभोद्भासिते व्योमनीले वसन्तीच्च वक्षःस्थले कैटभारेः ।
जगद्वल्लभां (३) सर्व्वलोकैकनाथां श्रियं तां महादेव्यहं त्वामवैमि ॥६१॥
अजाद्रीड्गुहाशाक्षपोत्रीन्द्रकाणां महाभैरवस्यापि चिह्नं वहन्त्यः ।
विभो मातरः सप्त तद्रूपरूपाः स्फुरन्त्यस्त्वदंशा महादेवि ताश्च ॥ ६२ ॥

---

(१) "वरत्वेन" इति पाठान्तरम् । (३) "जगद्दुर्लभाम्" इति पाठान्तरम् ।
(२) "चित्तात्मरूपे" इति पाठान्तरम् ।

समुद्यद्दिवाकृत्सहस्राभभासा सदा सन्तताशेषविश्वावकाशे ।
लसन्मौलिबद्धेन्दुलेखे सपाशाङ्कुशाभीत्यभीष्टात्तहस्ते नमस्ते(१) ॥ ६३ ॥
प्रभा कीर्त्तिकान्ती दिवारात्रिसन्ध्याः क्रियाशा तमिस्रा क्षुधावृद्धिमेधाः ।
धृतिर्व्वाञ्छतिः सन्मतिः श्रीश्च कान्ति(२)स्त्वमेवेशि येऽन्ये च शक्तिप्रभेदाः ॥६४॥
हरे विन्दुनादैः सशक्त्याख्यशान्तैर्नमस्तेऽस्तु भेदप्रभिन्नैरभिन्ने ।
सदा सप्तपाताललोकाचलाब्धिग्रहद्वीपधातुस्वरादिस्वरूपे ॥ ६५ ॥
नमस्ते समस्ते समस्तस्वरूपे समस्तेषु वस्तुष्वनुस्यूतशक्ते ।
स्थितस्थूलसूक्ष्मस्वरूपे महेशि स्मृते बोधरूपेऽप्यबोधस्वरूपे ॥ ६६ ॥
मनोवृत्तिरस्तु स्मृतिस्ते समस्ता तथा वाक्प्रवृत्तिः स्तुतिः स्यान्महेशि ।
शरीरप्रवृत्तिः प्रणामक्रिया स्यात् प्रसीद क्षमस्व प्रभो सन्ततं मे ॥ ६७ ॥
हृल्लेखाजपविधिमर्च्चनाविशेषानेतांस्तां स्तुतिमपि नित्यमादरेण ।
योऽभ्यस्येत् स खलु परां श्रियञ्च गत्वा शुद्धत्तद्व्रजति पदं परस्य धाम्नः॥६८॥
इति हृल्लेखाविहितो विधिरुक्तः संग्रहेण सकलोऽयम् ।
योऽस्मिन्नियतमना मन्त्री योगी स्यात् स एव भोगी च ॥ ६९ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकादशः पटलः ॥ * ॥

---

(१) "लसन्मौलिवद्धेन्दुरेखे त्रिनेत्रे सपाशाङ्कुशाभीत्यभीष्टात्तहस्ते" इति पाठान्तरम् ।
(२) "द्युतिर्व्वाञ्छतिः संनतिः श्रीश्च भक्तिः" इति पाठान्तरम् ।

## द्वादशः पटलः ।



अथ श्रियो मन्त्रविधिः समासतो जगद्धिताय प्रतिबध्यतेऽधुना ।
सहाङ्गभेदैः सजपार्चनाहुतक्रमैः समभ्युद्धरणाय दुर्गतेः ॥ १ ॥
वियत्तुरीयस्तु विलोमतोऽनलप्रदीपितो वामविलोचनान्वितः ।
सचन्द्रखण्डः कथितो रमामनुर्मनोरथावाप्तिमहासुरद्रुमः ॥ २ ॥
ऋषिर्भृगुश्छन्दसि चोदिता निवृत् समीरिता श्रीरपि देवता पुनः ।
द्विगच्चिकर्णेन मनुस्वरानलान्वितेन चास्या विहितं षड़ङ्गकम् ॥ ३ ॥

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्त्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्त्तवालेपनाढ्या
पद्माची पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रिये वः ॥ ४ ॥

संदीक्षितोऽथ गुरुणा मनुवर्य्यमेनं
सम्यग्जपेन्नियतधीर्दिननाथलक्षम् ।
अभ्यर्चयन्नहरहः श्रियमादरेण
मन्त्री सुशुद्धचरितो रहितो वधूभिः ॥ ५ ॥

जपावसाने दिनकृत्सहस्रसंख्यैः सरोजैर्मधुरत्रयाक्तैः ।
हुनेत्तिलैर्वा विधिनाथ विल्वैः समिद्वरैर्मन्त्रिवरस्त्रिभिर्वा ॥ ६ ॥
रुचिराष्टपत्रमथ वारिरुहं गुणवृत्तराश्रिचतुरस्रयुतम् ।
प्रविधाय पीठमपि तत्र संयजेन्नवशक्तिभिः सह रमाञ्च ततः ॥ ७ ॥

विभूतिरुन्नतिः कान्तिर्हृष्टिः कीर्त्तिश्च सन्नतिः ।
व्युष्टिरुत्कृष्टि ऋद्धिश्च रमाया नव शक्तयः ॥ ८ ॥

आवाह्य सम्यक्कलशे यथावत् समर्चनीया विधिना रमा सा ।
जप्त्वा यथाशक्ति पुनर्गुरुस्तु तं सेचयेत् संयतमात्मशिष्यम् ॥ ९ ॥

अङ्गैः प्रथमावृतिरपि मूर्त्तीभचतुष्कनिधियुगैरपरा ।
शक्त्यष्टकेन चान्या चरमा ककुबीश्वरैः समभ्यर्च्चा ॥ १० ॥

वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
दमकः सलिलश्चैव गुग्गुलुश्च कुरण्टकः ॥ ११ ॥
वराकी (१) विमला चैव कमला वनमालिका ।
विभीषिका मानिका च शाङ्करी वसुमालिका ॥ १२ ॥

अनयैव च पूर्व्वसेवया परितुष्टा कमला प्रसीदति ।
धनधान्यसमृद्धिसंकुलामचिरादेव च मन्त्रिणे श्रियम् ॥ १३ ॥
अभ्भस्युरोजद्वयसेऽभितिष्ठंस्त्रिलक्षमेनं प्रजपेच्च मन्त्री ।
श्रियं विचिन्त्यार्कगतां यथावत् दरिद्रताया भवति प्रमुक्तः ॥ १४ ॥
वसतावुपविश्य कैटभारेः कमलावृक्षतले तथा त्रिलक्षम् ।
जपतोऽपि भवेच्च काङ्क्षितार्थादधिको वत्सरतो वसुप्रपञ्चः ॥ १५ ॥
जुहुयादशोकदहने सघृतैरपि तण्डुलैः सकलवश्यतमम् ।
खदिरानले त्रिमधुरैरपि तैर्धनदश्च राजकुलवश्यमपि ॥ १६ ॥

समधुरनलिनानां लक्षहोमादलक्ष्मी-
परिगतमपि जन्तुं प्राप्नुयाच्छ्रीः समग्रा ।
धनविभवसमृद्ध्या नित्यमाह्लादयन्ती
त्यजति न करुणार्द्रा तस्य सा सन्ततिञ्च ॥ १७ ॥

विल्वं श्रीसूक्तजापी निजभुवि मुखजो वर्द्धयित्वास्य पूर्व्वं
पत्रैस्त्रिस्वादुयुक्तैः कुसुमफलसमिद्भिस्ततः स्कन्धभेदैः ।
तन्मूलैर्मण्डलात् प्राक् सुनियतचरितोऽसौ हुतान्निर्म्मलात्मा
रूपं पश्येद्रमायाः कथमिव च पुनस्तत् कुले स्यादलक्ष्मीः ॥ १८ ॥
हृदयकमलवर्णतः परस्तादमृतमनन्तयुतं ततश्च सिद्धेः ।
हुतवहदयितेत्यसौ रमायाः प्रवरधनार्थिभिरर्थितो हि मन्त्रः ॥ १९ ॥

---

(१) "वलाकी" इति पाठान्तरम् ।

दक्षोऽस्य स्यादृषिश्छन्दसि च सुमतिभिरुक्ता विराड्देवता ।
श्रीर्देवी पद्मिनीभ्यां हृदयकशिरसी विष्णुपत्न्या शिखा च ।
मेदोरेफाह्वदार्णैरपि च कमलरूपाक्षरैर्वर्म चास्त्रं
ताराद्याभिर्नमोऽन्ताभिरपि निगदितं जातियुक्ताभिरङ्गम् ॥ २० ॥
पद्मस्था पद्मनेत्रा कमलयुगवराभीतियुग्दोःसरोजा
देहोत्थाभिः प्रभाभिस्त्रिभुवनविवरं भास्वरा भासयन्ती ।
मुक्ताहाराभिरामोन्नतकुचकलशा रत्नमञ्जीरकाञ्ची-
ग्रैवेयोर्म्यङ्गदाढ्या धृतमणिमुकुटा श्रेयसे श्रीर्भवेद्वः ॥ २१ ॥
ध्यात्वैवं श्रियमपि पूर्व्वक्लृप्तपीठे
पत्राद्यौ प्रथममथार्च्चयेत्तदङ्गैः ।
अष्टाभिर्दलमनुशक्तिभिस्तदन्ते
लोकेशैरिति विधिना समर्च्चयेत् सम्पद्भ्यै ॥ २२ ॥
दीक्षातो जपतु रमारमेशभक्तो
लक्षाणां दशकमग्नुं मनुं नियत्या ।
स श्रीमान् बहुधनधान्यसङ्कुलः स-
न्मेधावी भवति च वत्सरेण मन्त्री ॥ २३ ॥
इति मन्त्रजपादृतधीर्मधुरत्रितयैरयुतं जुहुयात् कमलैः ।
परिशुद्धमना न चिरात् स पुनर्लभते निजवाञ्छितमर्थचयम् ॥ २४ ॥
समुद्रगायामवतीर्य्य नद्यां स्वकण्ठमात्रे पयसि स्थितः सन् ।
त्रिलक्षजाप्याद्धृतमोऽब्दमात्रान्मन्त्री भवेन्नात्र विचारणीयम् ॥ २५ ॥
नन्द्यावर्त्तैर्जुहुत भगमेऽभ्यर्च्य लक्ष्मीं सहस्रं
तावद्बिल्वैस्त्रिमधुरयुतैर्व्वा फलैः पौर्णमास्याम् ।
पञ्चम्यां वा सितसरसिजैः शुक्रवारेऽच्छपुष्पै-
रन्यैर्मासं प्रतिहुतविधेर्व्वत्सरात् स्याद्धनाढ्यः ॥ २६ ॥
ताररमामायाः श्रीकमले कमलालये प्रसीदयुगम् ।
वीजानि तानि पुनरपि समहालक्ष्म्यै हृदिन्दिरामन्त्रः ॥ २७ ॥

त्रिभिस्तु वर्णैर्हृदयं शिरोऽपि स्यात् पञ्चभिश्चाथ शिखा त्रिवर्णैः ।
त्रिभिस्तथा वर्म्म चतुर्भिरस्त्रं पृथक् त्रिबीजापुटितैस्तदङ्गम् ॥ २८ ॥

हस्तोद्यद्वसुपात्रपङ्कजयुगादर्शा स्फुरन्नूपुरा
ग्रैवेयाङ्गदहारकङ्कणमहामौलिर्ज्वलत्कुण्डला ।
पद्मस्था परिचारिकापरिवृता शुक्लाङ्गरागांशुका
देवी दिव्यगणार्च्चिता भवदघप्रध्वंसिनी स्याद्रमा ॥ २९ ॥

लक्षं जपेन्मनुमिमं मधुरत्रयाक्तै-
र्बिल्वैः फलैः प्रतिहुनेदयुतं तदन्ते ।
आराधयेत् प्रतिदिनं प्रतिवक्ष्यमाण-
मार्गेण दुर्गतिभयाद्रहितो भवेत् सः ॥ ३० ॥

श्रीधरश्च हृषीकेशो वैकुण्ठो विश्वरूपकः ।
वासुदेवादयश्चाङ्गावरणात् समनन्तरम् ॥ ३१ ॥
भारतीपार्व्वतीचान्द्रीशचीभिरपि संयुता ।
दमकादिभिस्तृतीयाऽनुरागाद्यैश्चतुर्थ्यपि ॥ ३२ ॥
अनुरागोऽविसम्वादो विजयो वल्लभो मदः ।
हर्षो बलश्च तेजश्चेत्यष्टौ वाणा महाश्रियः ॥ ३३ ॥
अनन्तब्रह्मपर्य्यन्तैः पञ्चमीन्द्रादिभिर्मता ।
चक्रपद्मान्तिकैः षष्ठी वज्राद्यैरावृतिः श्रियः ॥ ३४ ॥

सम्पूज्यैवं श्रियमनुदिनं यो जपेन्मन्त्रमेनं
प्रोक्तां संख्यां सहुतविधिमप्युच्छ्रितां प्राप्य लक्ष्मीम् ।
वित्ताद्व्रीगवनिपशुपुत्रादिभोगैः समृद्धो
वर्षाद्देहापदि च पदमप्येति नित्यं स विष्णोः ॥ ३५ ॥

श्रीमन्त्रेष्विति गदितेषु भक्तियुक्तः श्रीसूक्तान्यपि च जपेद्यजेद्धुनेच्च ।
श्रीसूक्ते प्रथमतरे स्वयं मुनिः स्यादन्येषां मुनय इमे भवन्ति भूयः ॥ ३६ ॥

आनन्दः कर्द्दमश्चैव चिक्लीतश्चेन्दिरासुतः ।
ऋचामथो तदन्यासामृषयः समुदीरिताः ॥ ३७ ॥

आद्ये सूक्तत्रये छन्दोऽनुष्टुप् कांस्ये बृहत्यपि ।
तदन्त्ययोस्त्रिष्टुवाख्यं परस्तादष्टके पुनः ॥ ३८ ॥
अनुष्टुबन्त्ये प्रस्तारपङ्क्तिश्छन्दांसि वै क्रमात् ।
अग्नी स्यातां देवते च न्यासाङ्गविधिरुच्यते ॥ ३९ ॥
मूर्धाक्षिकर्णनासामुखगलदोर्हृदयनाभिगुह्येषु ।
पायूरुजानुजङ्घाचरणेषु न्यसतु सूक्तकैः क्रमशः ॥ ४० ॥
सहिरण्मयी च चन्द्रा रजतहिरण्यस्रजे हिरण्याख्या ।
अङ्गानि जातियुञ्जि त्वथ च हिरण्यवर्णाह्वया तथास्त्रं स्यात् ॥ ४१ ॥

अरुणकमलसंस्था तद्रजःपुञ्जवर्णा-
करकमलधृतेष्टाभीतियुग्माम्बुजा च ।
मणिमुकुटविचित्रालङ्कृता कल्पजाते-
र्भवतु भुवनमाता सन्ततं श्रीः श्रिये वः ॥ ४२ ॥

आरभ्यार्च्चां प्रतिपदमथ प्राप्तदीक्षो वियुक्त-
स्तन्वङ्गीभिस्तनुविमलवासाः सुधौतद्विजाढ्यः ।
एकादश्यामथ परिसमाप्यार्कसाहस्रिकान्तं
जापं मन्त्री प्रयजतु रमां प्राक्तनप्रोक्तपीठे ॥ ४३ ॥
पद्मा सपद्मवर्णा पद्मस्थार्द्रा च तर्पयन्त्यभिधा ।
तृप्ता ज्वलन्त्यभिख्या स्वर्णप्राकारसंज्ञका चेति ॥ ४४ ॥
मध्ये दिशाधिपाङ्गावृत्योरेतास्ततश्च वज्रादीन् ।
प्रयजेच्चतुरावरणं निगदितमिति सूक्तकल्पितं विधानम् ॥४५॥
अन्नघृताभ्यां जुहुयादनुदिनमष्टोत्तरं शतं मन्त्री ।
आवाहनासनार्घ्यकपाद्याचमनमधुपर्कसेकानि ॥ ४६ ॥
वासोभूषणगन्धान् सुमनोयुतधूपदीपभोज्यानि ।
सोद्वासनानि कुर्याद्भक्तियुतः पञ्चदशभिरथ मनुभिः ॥ ४७ ॥
व्यस्तैरपि च समस्तैः पूजायां संयतात्मकः सिद्धैर ।
पद्मैर्बिल्वसमिद्भिः पयोन्धसा सर्पिषा क्रमाज्जुहुयात् ॥ ४८ ॥

एकैकं त्रिस्त्रिशतं द्वादश्यां भोजयीत विप्रांश्च ।
मन्दारकुन्दकुमुदकनन्द्यावर्त्ताख्यमालतीजात्यः ।
कल्लारपद्मरक्तोत्पलकेतकचम्पकादयो ग्राह्याः ॥ ४९ ॥
परिषिञ्चेच्छिशो नित्यं सूक्तैस्तैः स्नानकर्म्मणि ।
आदित्याभिमुखो जप्याद्यावत्तावच्च तर्पयेत् ॥ ५० ॥
अर्च्चयेद्विधिनाऽनेन दिनशो जुहुयाच्छिशः ।
एवं करोति षण्मासं योऽसौ स्यादिन्दिरापतिः ॥ ५१ ॥
उद्बुद्धमात्रे नलिने नवनीतं विनिक्षिपेत् ।
सकर्णिके सकिञ्जल्कोदरे पत्रान्तरालके ॥ ५२ ॥
पुनस्तत् पद्ममुद्धृत्य सुसमिद्धे विभावसौ ।
जुहुयादन्वयायर्चा शतमष्टोत्तरं जपन् ॥ ५३ ॥
चत्वारिंशच्छुक्रवारैर्महाश्रीस्तस्य जायते ।
कांस्योऽस्मी(१)त्यनया सम्यगेकादश घृताहुतीः ।
षण्मासं जुह्वतो नित्यं भूयात् प्रायो महेन्दिरा ॥ ५४ ॥
सूक्तैरेतैर्जपतु जुहुयादर्च्चयीतावगाहेत्-
सिञ्चेदह्नि दिनमनु तथा संयतस्तर्पयीत ।
संशुद्धात्मा विविधधनधान्याकुलाभ्यन्तरोऽसौ
मन्त्री सर्व्वैर्भुवि बहुमतः श्रीमतां स्यात् पुरोगः ॥ ५५ ॥
श्रीर्लक्ष्मीर्व्वरदा विष्णुपत्नी च सुवसुप्रदा ।
हिरण्यरूपा सस्वर्णमालिनी रजतस्रजा ॥ ५६ ॥
ससुवर्णगृहा स्वर्णप्राकारा पद्मवासिनी ।
पद्महस्ता पद्मपूर्व्वप्रिया मुक्तापदादिका ॥ ५७ ॥
अलङ्कारा तथा सूर्य्या चन्द्रा बिल्वप्रियेश्वरी ।
भुक्तिः प्रपूर्व्वा मुक्तिश्च विभूत्यृद्धिसमृद्धयः ॥ ५८ ॥

---

(१) "कांस्योऽस्मि" इति मन्त्रः श्रीसूक्तादौ द्रष्टव्यः ।

तुष्टिः पुष्टिश्च धनदा तथान्या तु धनेश्वरी (१)।
शुद्धा सम्भोगिनी भोगदा सधात्रविधात्रके ॥ ५९ ॥
द्वात्रिंशदेताः श्रीदेव्या ये मन्त्राः समुदीरिताः।
तारादिका नमोऽन्ताश्च तैरर्चांसु बलिं हरेत्।
तर्पयेच्च महादेवीं दिनादौ (२) मन्त्रवित्तमः ॥ ६० ॥
नाभ्यक्तोऽश्यान्न नग्नः सलिलमवतरेन्न स्वपेद्वाऽशुचिः स-
न्नाभ्यञ्ज्यान्नैव चाद्यात्तिलरुहलवणे केवलेनैव दोषाम्।
वक्त्रे लिम्पेद्ददेन्नानृतमपि मलिनः स्यान्न बिल्वाम्बुजाक्ष-
द्रोणान्नो धारयेत् के भुवमपि न वृथैवालिखेदिन्दिरार्थी ॥ ६१ ॥
सुविमलचरितः स्याच्छुद्धमाल्यानुलेपा-
भरणवसनदेहो मुख्यगन्धोत्तमाङ्गः।
सुविशदनखदन्तः शुद्धधीर्विष्णुभक्तो
विमलरुचिरशय्यः स्याच्चिरायेन्दिरार्थी ॥ ६२ ॥
दुष्टां कष्टान्ववायां कलहकलुषितां मार्गदुष्टामनिष्टा-
मन्यासक्तामसक्तामतिविपुलकृशाङ्गीमतिक्रस्वदीर्घाम्।
रोगार्त्ताभोगलोलां प्रतिपुरुषचलां राजकान्तामकान्तां
काकाचीमिकचारां गृहकुसुमयुतां न स्पृशेदिन्दिरार्थी ॥ ६३ ॥
शान्तः शश्वत्स्मितमधुरपूर्वाभिभाषी दयार्द्रो
देवाचार्य्यातिथिदहनपूजारतः पुण्यशीलः।
नित्यस्नायी नियमनिरतः प्रत्यगाशामुखाशी
मन्त्री वर्णाश्रमदृढरतिः स्याच्चिरायेन्दिरार्थी ॥ ६४ ॥
श्रीमन्त्रभक्तः श्रितविष्णुदीचः श्रीसूक्तजापी सितधीः सुशीलः।
स्वदारतुष्टो मितभाषणाशी लोकप्रियः स्याच्चिरमिन्दिरार्थी ॥ ६५ ॥
॥ * ॥ इति श्रीप्रपञ्चसारे द्वादशः पटलः ॥ * ॥

---

(१) "तथान्या भुवनेश्वरी" इति पाठान्तरम्। (२) "दिनशः" इति पाठान्तरम्।

## त्रयोदशः पटलः ।

अथ रमाभुवनेशिमनोभवैस्त्रिपुटसंज्ञकमन्त्रमुदीरितम् ।
सकलवर्गफलाप्तियशस्करं जगति रञ्जनदं कविताकरम् ॥ १ ॥
वीजैस्त्रिभिर्द्विरुक्तैः कुर्य्यादङ्गानि साधकः सिद्धैः ।
पूर्व्वतरैरितयोर्व्वा द्वयोरप्येकं तदङ्गयोः प्रभजेत् ॥ २ ॥
नवकनकभासुरोर्व्वीविरचितमणिकुट्टिमे सकल्पतरौ ।
रत्नवरबद्धसिंहासननिहितसरोरुहे समासीनाम् ॥ ३ ॥

आबद्धरत्नमुकुटां (१) मणिकुण्डलोद्यत्-
केयूरकोर्म्मिरसनाद्वयनूपुराढ्याम् ।
ध्यायेद्धृताब्जयुगपाशवराङ्कुशेक्षु-
चापां सपुष्पविशिखां नवहेमवर्णाम् ॥ ४ ॥

चामरमुकुरसमुद्गकताम्बूलकरङ्कवाहिनीभिः ।
दूतीभिः समभिवृतां पश्यन्तीं साधकं प्रसन्नदृशा ॥ ५ ॥

लोकेश्वरीमिति विचिन्त्य जपेच्च मन्त्र-
मादित्यलक्षमथ मन्त्रितमो जपान्ते ।
श्रीराजवृक्षसमिधां सजवार्त्तवानां
तावत् सहस्रममितं मधुरैर्जुहोतु ॥ ६ ॥

अङ्गैर्लक्ष्मीहरिगिरिसुताशर्व्वरत्यङ्गजातैः
षट्कोणस्थैर्निधियुगयुतैस्तद्बहिर्मातृभिश्च ।
योषिद्रूपैर्व्वहिरपि यजेल्लोकपालैस्तदेतत्
प्रोक्तं देव्या अपि सुरगणैः पूजनीयं विधानम् ॥ ७ ॥

---

(१) "आबद्धहेममुकुटाम्" इति पाठान्तरम् ।

लक्ष्मीगौरीमनसिजशयवीजानि कृत्वा कलायां
ताञ्चापीन्दौ तमपि गगने तच्च सिन्दूरवर्णम् ।
स्मृत्वा बुद्धा भुवनमखिलं तन्मयत्वेन मन्त्री
देवान् वश्यानपि वितनुते किं पुनर्मर्त्यजातीन् ॥ ८ ॥

य इमं भजति मनुं मनस्वी विधिना वा पुनरर्च्चयेद्विधानम् ।
सतु सम्यगवाप्य दृष्टभोगान् परतस्तत्परमेशमेति धाम ॥ ९ ॥

सहृदयभगवत्यै दान्तरणे धरार्णाः
सणिधरशिवधार्णौरिद्विठान्ता ध्रुवाद्याः ।
गदितमितिधराया मन्त्रमुत्कृष्टधात्री-
सुखसुतधनधान्यप्राप्तिदं कीर्त्तिदञ्च ॥ १० ॥

ऋषिरपि वराह उक्तश्छन्दो निवृदस्य देवता धरणी ।
मनुनाऽमुनैव च पदैः षोढ़ाविभिन्नेन निगदितोऽङ्गविधिः ॥ ११ ॥

मुख्याम्भोजे निविष्टारुणचरणतला श्यामलाङ्गी मनोज्ञा
चञ्चच्छाल्यग्रचुम्बच्छुकलसितकरा प्राप्तनीलोत्पला च ।
रत्नाकल्पाभिरामा मणिमयमुकुटा चित्रवस्त्रा प्रसन्ना
दिश्याद्विश्वम्भरा वः संततमभिमतं बल्लभा कैटभारेः ॥ १२ ॥

लक्षायुता च सदशांशहुतावसाना
प्रोक्ता धराहृदयमन्त्रजपक्रिया स्यात् ।
सर्पिष्मता सुविमलेन पयोऽन्धसास्य
होमे विधिः सकलसिद्धिकरः किलायम् ॥ १३ ॥

पीठे विष्णोः पूजयेत् पूर्व्वमङ्गैर्भूवक्त्रश्म्बुप्राणसंज्ञैश्च भूतैः ।
शान्त्यन्ताभिः शक्तिभिः साकमाशापालैः पृथ्वीं संयतात्मोपहारैः ॥१४॥

पुष्पैः प्रियङ्गोर्मधुरत्रयाक्तैर्नीलोत्पलैर्व्वापि तथारुणैस्तैः ।
सहस्रमानं प्रतिजुह्वतः स्याद्गौर्गोमती शस्यकुलाकुला च ॥ १५ ॥

पिञ्जरां पृथुलशालिमञ्जरीं यो जुहोति मधुरत्रयोच्चिताम् ।
नित्यशः शतमथास्य मण्डलाद्वस्तगा भवति विस्तृता मही ॥ १६ ॥

भृगोस्तु वारे निजसाध्यभूमृद्विलोड़िताम्भः परिपक्कमन्धः ।
पयोघृताक्तं जुहुयात् सहस्रं दुग्धेन वाऽन्नेन 'दिनावतारे ॥ १७ ॥
षण्मासादनुभृगुवासरमेष होमः सम्पन्नान् समुपनयेद्वराप्रदेशान् ।
पुत्रान् वा पशुमहिषेष्टजुष्टपुष्टामिष्टामप्यनुदिनमिन्दिरां समग्राम् ॥१८॥

संक्षेपतो हृदयमन्त्रविधिर्धरायाः
प्रोक्तो हिताय जगतां रहितक्षमाणाम् ।
एनं भजन्निति धराकमलासमृद्धः
स्यादत्र सिद्धिमपरत्र परां प्रयाति ॥ १९ ॥

अथ पुरुषार्थचतुष्टयसिद्धिकरी मन्त्रजापनिरतानाम् ।
त्वरिताख्येयं विद्या निगद्यते जपहुतार्च्चनविधिभिः ॥ २० ॥
भक्तियुतानां त्वरया सिद्धिकरी चेति मन्त्रिणां सततम् ।
देव्यास्त्वरिताख्या स्यात्त्वरितं च्वेड़ग्रहादिहरणतया ॥ २१ ॥
वमर्द्वौ च तदन्त्यः शिवयुक् चरमाङ्गनाद्युसार्घिलवम् ।
अन्त्यः सयोनिरस्त्रान्तिकः सतारो मनुर्द्दशार्णयुतः ॥ २२ ॥
तारान्तेऽस्त्रादावपि मायावीजं प्रयोजयेन्मन्त्री ।
तेन हि काङ्क्षितसिद्धिर्भूयादचिरेण मन्त्रविदाम् ॥ २३ ॥
कूर्म्मादिभ्यां द्वाभ्यां द्वाभ्यामपि पूर्व्वपूर्व्वहीनाभ्याम् ।
कुर्य्यात् सप्तभिरर्णैरङ्गानि च षट् क्रमेण मन्त्रज्ञः ॥ २४ ॥
कालिकगलहृन्नाभिगुह्योरुषु जानुजङ्घयोः पदयोः ।
देहन्यासं कुर्य्यान्मन्त्रेण व्यापकं समस्तेन ॥ २५ ॥
श्यामलतनुमरुणपङ्कजचरणतलां वृषलनागमञ्जीराम् ।
पर्णांशुकपरिधानां वैश्याहिद्वन्द्वमेखलाकलिताम् ॥ २६ ॥
तनुमध्यनतां पृथुस्तनयुगलां करविराजदभयवराम् ।
शिखिपिच्छनालवलयां गुञ्जाफलगुणितभूषितारुणिताम् ॥ २७ ॥
नृपफणिकृतकेयूरान्तां गलविलसद्विविधमणियुताभरणाम् ।
द्विजनागविहितकुण्डलमण्डितगण्डद्वयोमुकुरशोभाम् ॥ २८ ॥

शोणतराधरपल्लवविद्रुममणिभासुरां प्रसन्नाञ्च ।
पूर्णशशिबिम्बवदनामरुणायतलोचनत्रयीनलिनाम् ।
कुञ्चितकुन्तलविलसन्मुकुटाघटिताहिवैरिपिञ्छयुताम् ॥ २९ ॥
कैराती वनकुसुमोज्ज्वलां मयूरातपत्रकेतनिकाम् ।
सुरुचिरसिंहासनगां विभ्रमसमुदायमन्दिरां तरुणीम् ॥ ३० ॥
तामेनां त्वरिताख्यां ध्यात्वा कुर्य्याज्जपार्च्चनाहोमान् ।
दीक्षां प्राप्य गुरोरथ लक्षं जप्याद्दशांशकं जुहुयात् ॥ ३१ ॥
बिल्वसमिद्भिस्त्रिमधुरसिक्ताभिः साधकः सुसंयतधीः ।
अष्टहरिविधृतसिंहासने समावाह्य सरसिजे देवीम् ॥ ३२ ॥
अङ्गैः सह प्रणीतां गायत्रीं पूजयेद्दिशां क्रमतः ।
हुङ्काराख्या खेचरिचण्डे सच्छेदनी तथा क्षपणी ॥ ३३ ॥
भूयस्त्रियाह्वयाहुङ्कारीसक्षेमकारिकाः पूज्याः ।
सश्रीवीजा लोकेशायुधभूषान्विता दलाग्रेषु ॥ ३४ ॥
फट्कारी चाप्यग्रे शरा सशरधारिणी च तद्वाह्ये ।
सस्वर्णवेत्रयष्टी द्वास्थे पूज्ये पुनर्जयाविजये ॥ ३५ ॥
कृष्णो वर्व्वरकेशो लगुड़धरः किङ्करश्च तत्पुरतः ।
अरुणैश्चन्दनकुसुमैर्वनजैरपि धूपदीपनैवेद्यैः ॥ ३६ ॥
प्रवरैश्च नृत्यगीतैः समर्च्चयेद्भक्तिभरावनम्रतनुः ।
जपहुतपूजाभेदैरिति सिद्धे मन्त्रजापिनो मन्त्रे ॥ ३७ ॥
नारीनरनरपतयः कुर्व्वन्ति सदा नमस्क्रियामस्मै ।
विद्याधर्य्यो यक्ष्यः ससुरासुरसिद्धचारणप्रमदाः ॥ ३८ ॥
अप्सरसश्च विशिष्टाः साधकसक्तेन चेतसाकुलिताः ।
स्मरशरविह्वलिताङ्ग्यो रोमाञ्चितगात्रवल्लरीललिताः ॥ ३९ ॥
घनघर्म्मबिन्दुमौक्तिकविलसत्कुचमण्डलद्युतयः ।
विस्पष्टजघनवक्षोरुहदोर्मूलाः प्रस्खलत्पदन्यासाः ॥ ४० ॥

मुकुलितनयनसरोजाः प्रस्यन्दित (१) दशनवसनसंभिन्नाः ।
स्रस्यमानांशुकचिकुरा मदविवशस्खलितमन्दभाषिण्यः ॥ ४१ ॥
मृदुतरमस्तकविरचितनत्यञ्जलयः प्रसादकाङ्क्षिण्यः ।
ईश्वरस्व देहि वाचं परिरम्भणपरमसौख्यमस्माकम् ॥ ४२ ॥
एहि सुरोद्यानादिषु रंस्यामः स्वेच्छया निरातङ्कम् ।
इत्यादिवादिनीभिः प्रलोभ्यमानो यदा न विक्रियते मन्त्री ॥ ४३ ॥

तदैव वाञ्छितमखिलं तस्मै ददाति सा देवी ।
योनिं कुण्डस्यान्तः प्रकल्प्य तत्रानलं समाधाय ॥ ४४ ॥
सम्पूज्य पूर्व्वविधिना जुहुयात् सर्व्वार्थसिद्धये मन्त्री ।
इक्षुशकलैः समृद्ध्यै दूर्व्वाभिस्त्वायुषे श्रिये धान्यैः ॥ ४५ ॥
धान्याय यवैः पुष्ट्यै गोधूमैर्वृद्धये तिलैर्जुहुयात् ।
जम्बूभिः स्वर्गाप्त्यै वाजीभिः शत्रुशान्तये तथाऽश्वतकैः ॥ ४६ ॥
अक्षयसिद्ध्यै वकुलैः कीर्त्त्यै कुमुदैर्महोदयाय तथा ।
अरुणोत्पलैश्च पुष्ट्यै मधूकजैरिष्टसिद्धयेऽशोकैः ॥ ४७ ॥
पुन्नाग्यै पाटलजैः स्त्रीसिद्ध्यै निम्बजैश्च विद्विष्ट्यै ।
तुष्ट्यै नीलोत्पलकैः सचम्पकैः कनकसिद्धये पद्मैः ॥ ४८ ॥
सह किंशुकैश्च सर्व्वोपद्रवशान्त्यै स साधको जुहुयात् ।
हुतसंख्या साहस्री त्रियुता वाथायुतान्तिकी भवति ॥ ४९ ॥
यावत् संख्यो होमस्तावज्जप्यश्च मन्त्रिणां मन्त्रः ।
अनुमन्त्रितैश्च वारिभिरासेकः क्ष्वेलशान्तिकृद्भवति ॥ ५० ॥
तज्जप्तयष्टिघातो मन्त्रितचुलुकोदकाहतिश्च तथा ।
तत्कर्णरन्ध्रजापात् सद्यो नश्युर्व्विषग्रहादिरुजः ।
तद्यन्त्रस्थापनमपि विषभूतादिप्रशान्तिकृत् प्रोक्तम् ॥ ५१ ॥

---

(१) "प्रस्यन्दित" इति पाठान्तरम् ।

आख्यां मध्ये सतारे मनुमथ शतसंयुक्तविंशत्पुटेषु
प्रादक्षिण्येन शर्व्वादिकमनु विलिखेत् द्वादशावृत्ति मन्त्री ।
विंशद्वन्द्वाष्टशूलाकलितविरचितं यन्त्रमेतत् सुजप्तं
बद्धं क्ष्वेलग्रहार्त्तिं हरति विजयलक्ष्मीप्रदं कीर्त्तिदञ्च ॥ ५२ ॥
आख्यां मध्यगताऽनले लिखतु दिक्पंक्तिष्वथ स्युः सक्रूं
चक्रूं श्रूं त्रूं करणादिषष्टिपदके शैवादिकालीमनुम् ।
नैर्ऋत्यादि तथा क्रमाद्यमवृतं वाह्येऽनलेनावृतं
प्रोक्तं निग्रहचक्रमन्तकपुरप्राप्तिप्रदं वैरिणाम् ॥ ५३ ॥
काली माररमालीकालीनमोचचमोनली ।
मामोदे ततदे मोमारचतक्खलतच्चर ॥ ५४ ॥
यमापाटटपामायमाटमोटटमोटमा ।
पामो भूरिरिभूमोपा टटरीख्खख्खरी रट ॥ ५५ ॥
वह्नेर्व्विन्निम्बनिर्यासकविषमसिभिः सीसपट्टेऽशुके वा
शावे पाषाणके वा विलिखतु मतिमान् काकपक्षेण यन्त्रम् ।
वल्मीके चत्वरे वा क्षततरुविवरे वा निदध्यादराति-
र्मृत्युं प्राप्नोति भूयादवयवविकलो व्याधितः पातितो वा ॥ ५६ ॥
चक्रे चाष्टाष्टपदे कालीं शिवयातुधानखण्डाद्यम् ।
यमदहनानिलवीतं विलिख्य विषदिग्धमर्कटीलिप्तम् ॥ ५७ ॥
जप्तमधोमुखमेतद्यन्त्रं यत्र तु देशे विनिक्षिपेन्मन्त्री ।
तत्रोपद्रवमखिलं दिनशः सर्व्वात्मना भवति ॥ ५८ ॥
खण्डेष्वेकाशीतिषु मध्येन्दुगसाध्यं
जूंसः पूर्व्वादिकचतुःपङ्क्तिषु शेखम् ।
लिख्याल्लक्ष्मीं शिष्टचतुःषष्टिषु विद्या-
नीशाद्यं क्रव्यादिशिवा वाह्ये त्वरिताख्याम् ॥ ५९ ॥
दिग्दिक्संस्थास्त्रपदादिवषड़न्तां मेदोमालावेष्टितं विम्वम् ।
घटवीतं पद्मस्थं तत्पङ्कजराजद्वदनान्तं प्रोक्तं चक्रं सम्यगथानुग्रहसंज्ञम् ॥ ६० ॥

श्री सा माया यामा सा श्री सा नो याज्ञे ज्ञेया नो सा ।
माया लीला लाली यामा याज्ञे लाली लीला ज्ञेया ॥ ६१ ॥

लाक्षाभिः कुङ्कुमैर्व्वा विलिखतु धवले चांशुके स्वर्णपट्टे
लेखन्या स्वर्णमय्या दृढ़मपि गुलिकीकृत्य सन्धारयेद्यः ।
कृत्यातो मृत्युतो वा ग्रहविषदुरितेभ्योऽपि मुक्तः सुधन्यो
जीवेत् स्वैः पुत्रपौत्रैरपरिमितमहासम्पदा दीर्घकालम् ॥ ६२ ॥

चतुःषष्ट्यंशे वा क्रमविदथ लक्ष्मीमनुममुं
शिवाद्यं नैरृत्यादिकमपि चतूर्णामृतब्रतम् ।
वहिः स्वच्छे पट्टे कनकविहिते पूर्व्वविधिना
लिखित्वा जप्त्वा निक्षिपतु शितधीर्यत्र तदिदम् ॥ ६३ ॥

चक्रमनुग्रहसंज्ञं मन्त्री देशेऽत्र सम्पदोऽविरतम् ।
शुभतरफलदायिन्यो भवन्ति शस्यर्द्धिकालवृष्ट्याद्याः ॥ ६४ ॥

हुङ्कारे साध्यसंज्ञां विलिखतु तदथो कर्णिकायाञ्च शिष्टा-
नष्टौ वर्णान् दलेष्वारचयतु हरमायां त्रिशो वेष्टयीत ।
कुम्भस्थं यन्त्रमेतत् सरसिजपुटितं सर्व्वरक्षाप्रसिद्धैर
जप्तं सर्व्वोपसर्गप्रशमनफलदं श्रीकरं वश्यकारि ॥ ६५ ॥

इति निगदितकृत्या पूजयेत्तोतलाया
मनुमनुदिनमेनं मानयेन्मानवो यः ।
स तु जगति समग्रां सम्पदं प्राप्यदेहा-
पदि मुदिततरात्मा युक्तधीर्मुक्तिमेति ॥ ६६ ॥

॥ इति तोतलाविधिः ॥

स्वरदीर्घेऽधरकाग्न्यौ दीर्घेत्यक्ष्वेलदद्रलान्तशिवाः ।
अभितः शक्तिनिरुद्धो द्वादशवर्णोऽयमीरितो मन्त्रः ॥ ६७ ॥

द्वाभ्याञ्चैकैकेन द्वाभ्यां द्वाभ्यां तथा पुनर्द्वाभ्याम् ।
मन्त्राक्षरैर्व्विदध्यादङ्गविधिं जातिसंयुतैर्म्मन्त्री ॥ ६८ ॥

इन्दुकलाकलितोज्ज्वलमौलिर्मारमदाकुलिताऽयुगनेत्रा ।
शोणितसिन्धुतरङ्गितपीतद्योतितभानुदलाम्बुजसंस्था ॥ ६९ ॥
दोर्धृतदाड़िमसायकपाशा साङ्कुशचापकपालसमेता ।
शोणदुकूलविलेपनमाल्या शोणतरा भवतोऽवतु देवी ॥ ७० ॥
स्मृत्वा नित्यान्देवीमेवं प्रजपेन्मनुं शतसहस्रम् ।
अयुतं जुहुयादन्ते नृपतरुसमिधा घृतेन वा सिद्धैः ॥ ७१ ॥
शाक्ते पीठे पूज्या देवी कुसुमानुलेपनैररुणैः ।
स्वयमप्यलङ्कृताङ्गः सधूपदीपैर्निवेद्यताम्बूलैः ॥ ७२ ॥
हृल्लेखा क्लेदिनी नन्दा क्षोभणी मदनातुरा ।
निरञ्जना रागवती क्लिन्ना च मदनावती ॥ ७३ ॥
मेखला द्राविणी चैव तथान्या वेगवत्यपि ।
सस्मरा द्वादश प्रोक्ताः शक्तयः पत्रसंस्थिताः ॥ ७४ ॥
अङ्गैः शक्तिभिराभिर्मातृभिराशाधिपैः क्रमात् पूज्याः ।
भक्तिभरानतवपुषा भवभयभङ्गाय मन्त्रिणाऽहरहः ॥ ७५ ॥
दारिद्र्यरोगदुःखैर्दौर्भाग्यजरापमृत्युदोषैश्च ।
अस्पृष्टो निरपायो जीवति मन्त्री भजन्निमं मनुजः ॥ ७६ ॥
इतीरिता लोकहिताय वश्यप्रस्तारिणी मन्दिरमिन्दिरायाः ।
या सर्व्वनारीनरराजवर्गसम्मोहिनी मोहनबाणभूता ॥ ७७ ॥
निद्रयोरन्तरापत्क्लिन्ने मदाः स्युश्च वे शिरः ।
मायादिकस्तथा वर्णद्वन्द्वैश्चाङ्गविधिः स्मृतः ॥ ७८ ॥
रक्ता रक्ताङ्गरागांशुककुसुमविलेपादिका सेन्दुमौलिः
खिद्यद्वक्त्रा मदविवशमाघूर्णितत्रीक्षणा च ।
दोर्भिः पाशाङ्कुशयुतकपालाभया पद्मसंस्था
देवी पायादमितफलदा नित्यशः पार्व्वती वः ॥ ७९ ॥
दीक्षितः प्रजपेल्लक्षं मनुमेनं हुनेत्ततः ।
मधूकपुष्पैः स्वाद्वक्तैरयुतं हविषाऽथवा ॥ ८० ॥

पीठं पूर्व्ववदभ्यर्च्य तत्रावाह्याभिपूजयेत् ।
अङ्गैश्च शक्तिभिर्लोकपालैर्देवीं समाहितः ॥ ८१ ॥
नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा ।
मदद्रवा द्राविणी च द्रविणा शक्तयो मताः ॥ ८२ ॥
प्रजपेत् प्रमदां विचिन्त्य यां वा शयनस्थो मनुवित् सहस्रमानम् ।
निशि मारशिलीमुखाहताङ्गी न चिरात् सा मदविह्वला समेति ॥ ८३ ॥
नित्याभिः सदृशतरा न सन्ति लोके लक्ष्मीदा जगदनुरञ्जनाश्च मन्त्राः ।
तस्मात्ताः शुभमतयो भजन्तु नित्यं जापार्चाहुतसमुपासनाविशेषैः ॥ ८४ ॥
स्वर्णपट्टेऽथवा भूर्जे पाशवीजेन वेष्टयेत् ।
शक्तिवीजं साध्यनाम तन्मध्ये परिकल्पयेत् ॥ ८५ ॥
केसरेषु लिखेत् पाशशूलिवीजे प्रदक्षिणम् ।
मन्त्रवर्णांशनित्यादीन् दलमध्येषु वाह्यतः ॥ ८६ ॥
इति स्वाहापदेनापि षोड़शाक्षरविद्यया ।
पाशाङ्कुशाख्यया पूर्व्वं प्रोक्तया वेष्टयेदपि ॥ ८७ ॥
एतद्यन्त्रं मदालिप्तं मृगमातङ्गयोः परम् ।
सर्व्वार्थसाधकं मूर्ध्नि करे वा विधृतं भवेत् ॥ ८८ ॥
अङ्कुशस्मरवाणानां वीजाद्यं शक्तिपाशयोः ।
सहस्रं प्रजपेद्दिनां विद्येशीं वीरमानसः ॥ ८९ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे त्रयोदशः पटलः ॥ * ॥

---

## चतुर्दशः पटलः ।

अथ वक्ष्यामि दुर्गाया मन्त्रान् साङ्गान् सदैवतान् ।
सजपार्च्चाहुतविधीन् प्रीत्यर्थं मन्त्रजापिनाम् ॥ १ ॥
तारो मायाऽमरेशोऽद्रिपीठो विन्दुसमन्वितः ।
स एव च विसर्गान्तो गायै नत्यन्तिको मनुः ॥ २ ॥
दुर्गास्य देवता छन्दो गायत्रं नारदो मुनिः ।
तारो माया च दुर्गायै क्रामाद्यन्ताङ्गकल्पना ॥ ३ ॥

शङ्खारिचापशरभिन्नकरां त्रिनेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितां सकलसिद्धनुताञ्च दुर्गां
दूर्व्वानिभां दुरितवर्गहरां नमामि ॥ ४ ॥

स्नाताभिषिक्तदीक्षस्तु वसुलक्षं जपेन्मनुम् ।
तदन्ते जुहुयात् सर्पिःसंयुतेन पयोन्धसा ॥ ५ ॥
अष्टसाहस्रसंख्येन तिलैर्व्वा मधुराप्लुतैः ।
पीठार्च्चायां प्रयष्टव्याः क्रमात्तच्छक्तयो नव ॥ ६ ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी तथा ।
सुप्रभा विजया सर्व्वसिद्धिदा नवमी तथा ॥ ७ ॥
अर्च्चा क्रस्वत्रयक्लीवरहितैश्च स्वरैरिमाः ।
तारान्ते वज्रमाभाष्य नखदंष्ट्रायुधाय च ॥ ८ ॥
महासिंहाय चेत्युक्त्वा वर्म्मास्त्रनतयः क्रमात् ।
सिंहमन्त्रोऽयमित्येवं संप्रोक्ता पीठकल्पना ॥ ९ ॥
अङ्गैः स्यादावृतिः पूर्व्वा द्वितीया शक्तिभिः स्मृता ।
अष्टायुधैस्तृतीया स्याल्लोकपालैश्चतुर्थ्यपि ॥ १० ॥

तदायुधैः पञ्चमी च दुर्गायजनमीदृशम् ।
जया च विजया कीर्त्तिः प्रीतिश्चाथ प्रभाह्वया ॥ ११ ॥
श्रद्धा मेधा श्रुतिरपि शक्तयः स्वाक्षरादिकाः ।
चक्रशङ्खगदाखड्गपाशाङ्कुशशरा धनुः ॥ १२ ॥
क्रमादष्टायुधाः प्रोक्ता दौर्गा दुर्गतिहारिणः ।
इत्थं दुर्गामनो जापहुतार्च्चाभिः प्रसाधिते ॥ १३ ॥
मन्त्रीन्दिरावान् भवति दीर्घायुर्दुरितान् जयेत् ।
यान् यानिच्छति कामान् स तांस्तानाप्नोत्ययत्नतः ॥ १४ ॥
विधाय विधिना तेन कलशन्त्वभिषेचयेत् ।
यमसौ भूतवेतालपिशाचाद्यैर्व्विमुच्यते ।
राजाभिषिक्तो विधिना सपत्नानमुना जयेत् ॥ १५ ॥
अमुना विधिना कृताभिषेका ललना पुत्रमवाप्नुयाद्विनीतम् ।
हवनात्तिलसर्षपैः सहस्रद्वितयैराशु भवेच्च गर्भरक्षा ॥ १६ ॥
अनयैव जपाभिषेकहोमक्रियया स्यादनुरञ्जनं जनानाम् ।
भजतां सकलार्थसाधनार्थं मुनिवर्य्यैः परिकल्पितोऽयमादौ ॥ १७ ॥
उत्तिष्ठपदं प्रथमं पुरुषि ततः किं पदं स्वपिषि युतम् ।
भयमपि मेऽन्ते समुपस्थितमित्युच्चार्य्य यदि पदं प्रवदेत् ॥ १८ ॥
शक्यमशक्यं वोक्ता तन्मे भगवति निगद्य शमयपदम् ।
प्रोक्ता ठद्वितययुतं सप्तत्रिंशाक्षरो मनुः प्रोक्तः ॥ १९ ॥
आरण्यकोऽस्यनुष्टुब्वनदुर्गाख्याः क्रमेण भगवत्याः ।
ऋष्यादिकाः स्वमनुना विहितान्यङ्गानि वाक्यभिन्नेन ॥ २० ॥
षड्भिश्चतुर्भिरष्टभिरष्टार्णैः षड्भिरपि च पञ्चार्णैः ।
जातियुतैश्च विदध्यादङ्गान्यपि षट् क्रमेण विशदमतिः ॥ २१ ॥
पद्द्वयसन्धिगुदान्धुष्वच्छाधारोदरपार्श्वहृत्स्तनेषु गले ।
दोःसन्धिवदननासाकपोलदृक्कर्णयुग्भ्रुके न्यस्येत् ॥ २२ ॥

हेमप्रख्यामिन्दुखण्डात्तमौलिं शङ्खारीष्टाभीतिहस्तां त्रिनेत्राम्।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां देवीं दुर्गां दिव्यरूपां नमामि॥ २३॥
अरिशङ्खकृपाणखेटबाणान् सधनुःशूलकतर्ज्जनीर्द्दधाना।
भवतां महिषोत्तमाङ्गसंस्था नवदूर्व्वासदृशी श्रियेऽस्तु दुर्गा॥ २४॥

चक्रदरखड्गखेटकशरकार्म्मुकशूलसंज्ञककपालैः।
ऋष्टिमुसलकुन्तनन्दकवलयगदाभिन्दिपालशक्त्याख्यैः॥ २५॥
उद्यद्विकृतिभुजाढ्या माहिषके सजलजलदसङ्काशा।
सिंहस्था वाऽग्निनिभा पद्मस्था चाथ मरकतश्यामा॥ २६॥
व्याघ्रत्वक्परिधाना सर्व्वाभरणान्विता त्रिनेत्रा च।
अहिकलितनीलकुञ्चितकुन्तलविलसत्किरीटशशिशकला॥ २७॥
सर्पमयवलयनूपुरकाञ्चीकेयूरहारसम्भिन्ना।
सुरदितिजाभयभयदा ध्येया कात्यायनी प्रयोगविधौ॥ २८॥
संयतचित्तो लक्षचतुष्कं जप्त्वा हुनेद्दशांशेन।
व्रीहितिलाज्यहविभिः सम्यक् संचिन्त्य भगवतीमनले॥ २९॥
पीठे पूर्व्वप्रोक्ते पूज्याङ्गैः शक्तिभिस्तथाष्टाभिः।
अष्टायुधैश्च मातृभिराशेशैः क्रमश एव दुर्गेयम्॥ ३०॥
आर्य्या दुर्गा भद्रा सभद्रकाली तथाम्बिकाख्या च।
क्षेमा सवेदगर्भा क्षेमङ्करी चेति शक्तयः प्रोक्ताः॥ ३१॥
अरिदरकृपाणखेटकबाणधनुःशूलपाण्डर(१)कपालाः।
अष्टायुधाः क्रमेणोक्ताः पूर्व्वविधानवदथोदितं शेषम्॥ ३२॥
इत्थं जपार्च्चनाहुतसिद्धमनोर्मन्त्रिणः प्रयोगविधिः।
विहितो जपः प्रतिदिनं निजरक्षायै शतं सहस्रं वा॥ ३३॥
उद्दिश्य यद्यदेनं मनुं जपेदथ सहस्रमयुतं वा।
तत्तन्मन्त्री लभतेऽचिरात्तदनुग्रहादसाध्यमपि॥ ३४॥

---

(१) "पाण्डर" इत्यत्र "संयुत" इति पाठान्तरम्।

स्नात्वार्काभिमुखः सन्नाभिसमकेऽम्भसि स्थितो मन्त्री।
अष्टोर्द्धशतं प्रजपेन्निजवाञ्छितसिद्धये च लक्ष्म्यै च ॥ ३५ ॥
ध्यात्वा त्रिशूलहस्तां ज्वरसर्पग्रहविपत्सु जन्तूनाम्।
संस्पृश्य शिरसि जप्यात्तज्जन्योपद्रवं द्रुतं (१) शमयेत् ॥ ३६ ॥
अयुतं तिलैर्वनोत्थे राजीभिर्वा हुनेत् समिद्भिर्वा।
मायूरकीभिरचिरात्तापस्मारादिकांश्च नाशयति ॥ ३७ ॥
जुहुयाद्रोहिणसमिधामयुतं मन्त्री पुनः सशृङ्गानाम्।
सर्व्वापदां विमुक्त्यै सर्व्वसमृद्ध्यै ग्रहादिशान्त्यै च ॥ ३८ ॥
आर्कैः समित्सहस्रैः प्रतिजुहुयादर्कवारमारभ्य।
दशदिनतोऽर्व्वाग्वाञ्छितसिद्धिर्देव्याः प्रसादतो भवति ॥ ३९ ॥
शुद्धैः सारैरिध्मैस्त्रिदिनं वा सप्तरात्रकं वापि।
प्रतिशकलं प्रतिजुहुयान्मनुना निजवाञ्छिताप्तये मन्त्री ॥ ४० ॥
विशिखानां त्रिंशत्कं पुरो निधायाथ तीक्ष्णतैलेन।
जुहुयात् सहस्रकं वाऽयुतमपि संख्यासु पूरितासु पुनः ॥ ४१ ॥
सम्पाततैलेन च शरान् समभ्युक्ष्य पूर्व्ववज्जुहुयात् (२)।
तानथ शूरो धन्वी शुद्धाचारः प्रवेशयेद्(३)बाणान् ॥ ४२ ॥
प्रतिसेनाया मध्ये सा धावति सद्य एव सम्भ्रान्ता।
भूयो गुरुं धनैरपि धान्यैः परिपूजयेच्च कारयिता ॥ ४३ ॥
अष्टोत्तरशतजप्तं यच्छिरसि प्रक्षिपेच्चिताभस्म।
स तु विद्विष्टो लोकैर्देशाद्देशान्तरं परिभ्रमति ॥ ४४ ॥
कारस्करस्य पत्रैरष्टसहस्रैर्निपातितैर्मरुता।
जुहुयात् सपादपांशुभिरुच्चाटकरं भवेद्रिपोः सद्यः ॥ ४५ ॥
सेनां संस्तम्भयितुं विषतरुसुमनःसहस्रकं जुहुयात्।
तावद्भिस्तत्पत्रैर्मन्त्री सेनां निवर्त्तयति ॥ ४६ ॥

(१) पुस्तकान्तरे "द्रुतम्" इति पाठो न दृश्यते।
(२) "समभ्युक्ष्य पूर्व्ववज्जप्यात्" इति पाठान्तरम्। (३) "प्रवेशयेत्" इति पाठान्तरम्।

विषतरुमयीश्च शत्रोः प्रतिकृतिमसकृत्प्रतिष्ठितप्राणाम् ।
छित्वा छित्वा काकोलूकवसाक्ताः सहस्रमष्टौ च ॥ ४७ ॥
असितचतुर्दश्यां तन्नाचैर्जुहुयादरण्यकेऽर्द्धनिशि ।
त्रिचतुर्दशीं प्रयोगादर्व्वाङ्म्रियते रिपुर्न सन्देहः ॥ ४८ ॥
खवसारक्तोपेतैर्जुहुयात्पत्रैरुलूकवायसयोः ।
म्रियतेऽरातिर्मत्तः स्यादुन्मत्तसमित्सहस्रहोमेन ॥ ४९ ॥
संस्थापितानिलान्तां प्रतिकृतिमुष्णोदके विनिःक्षिप्य ।
प्रजपेदुन्मादः स्याच्छत्रोर्दुग्धाभिषिक्तः शान्तिः ॥ ५० ॥
रविविम्बगतामरुणां करयुगपरिक्लृप्तशूलतर्जनिकाम् ।
ध्यात्वाऽयुतं प्रजप्यान्मारयितुं सद्यएव रिपुनिवहम् ॥ ५१ ॥
असिखेटकरार्कस्था क्रुद्धा मारयति सैव जपविधिना ।
सिंहस्था बाणधनुःकरा समुच्चाटयेदरीनचिरात् ॥ ५२ ॥
विषतरुसमिदयुतहुतादथ करिणो रोगिणो भवन्त्यचिरात् ।
तत्पर्णैश्च विनाशस्तेषामुच्चाटनञ्च तत्पुष्पैः ॥ ५३ ॥
आनित्यकसमिद्धोमाद्रोगा नश्यन्ति दन्तिनामचिरात् ।
तत्पुष्पैर्मधुराक्तैर्होमाच्च वशीभवन्ति मातङ्गाः ॥ ५४ ॥
त्रिमधुरयुतैरानित्यकपत्रैर्मत्ता भवन्ति ते सद्यः ।
रक्षाकरस्तु करिणां तज्जापितपञ्चगव्यलेपः स्यात् ॥ ५५ ॥
आज्यतिलराज्यानित्यकदुग्धौदनपञ्चगव्यतण्डुलकैः ।
सघृतैश्च प्रत्येकं सहस्रहवनङ्गजाश्ववर्द्धनकृत् ॥ ५६ ॥
द्विजभूरुहं महान्तं छित्वा निर्भिद्य पञ्चधा भूयः ।
आशाक्रमेण पञ्चायुधा विधेयाश्च साधु शिल्पविदा ॥ ५७ ॥
शङ्खः सनन्दकोऽरिः शार्ङ्गः कौमोदकी दिशां क्रमशः ।
पञ्चेति पञ्चगव्ये निधाय जप्याच्च पञ्चसाहस्रम् ॥ ५८ ॥
तावद्घृतेन जुहुयात्तेष्वथ सम्पात्य साधु सम्पातम् ।
पुनरपि तावज्जप्त्वा मध्याद्यवटेषु पञ्चगव्ययुतम् ॥ ५९ ॥

संस्थाप्य समीकृत्य च वलिं हरेत्तत्र तत्र तन्मन्त्रैः ।
पुरराष्ट्रग्रामाणां कार्य्या रक्षैवमेव मन्त्रविदा ॥ ६० ॥
यस्मिन् देशे विहिता रक्षेयं तत्र वर्द्धते लक्ष्मीः ।
धनधान्यसमृद्धिः स्याद्रिपुचोराद्याश्च नैव बाधन्ते ॥ ६१ ॥
पद्मोत्पलकुमुदहुतैर्नृपपत्नीर्ब्राह्मणान् वशीकुरुते ।
कह्लारलवणहोमैर्विट्शूद्रौ जातिभिस्तथा ग्रामम् ॥ ६२ ॥
अथ वारिदरगदाम्बुजकरं मुकुन्दं विचिन्त्य रविबिम्बे ।
व्यत्यस्तपुरुषभगवत्पदं मनुं भजतु सर्व्वसिद्धिकरम् ॥ ६३ ॥
साध्याख्याक्षरगर्भितं मनुमिमं पत्रे लिखित्वा च त-
च्चक्री हस्तमृदा कृतप्रतिकृतेर्विन्यस्य मन्त्री हृदि ।
सम्राहन्त्वथ पुत्तलीमभिमुखे संस्थाप्य सन्ध्यात्रये
जप्यादष्टशतं चिराय वशतां गच्छत्यसौ निश्चयः ॥ ६४ ॥
व्रीहीणां जुहुयान्नरोऽष्टशतकं सम्वत्सराद्व्रीहिमान्
गोदुग्धैः पशुमान् घृतैः कनकवान् दध्ना च सर्व्वर्द्धिमान् ।
अन्नैरन्नसमृद्धिमांश्च मधुभिः स्याद्रत्नवान् दूर्व्वया-
प्यायुष्मान् प्रतिपङ्कजेन महतीं सद्यः श्रियं प्राप्नुयात् ॥ ६५ ॥

क्षान्तं मरुच्च रसवर्णयुतं (१) सवाद्यं
संवौषरा शूलिनिपदञ्च सदुष्टशब्दम् ।
पश्चान्तकं सदहनं परिभाष हान्तं
हुं फट् द्विठान्तमिति शूलिनिमन्त्रमेव ॥ ६६ ॥

ऋषिर्दीर्घतपाश्छन्दः ककुब्दुर्गा च देवता ।
दुर्गा रुद्ररदा शीर्षं शिखा स्याद्विन्ध्यवासिनी ॥ ६७ ॥
वर्माऽसुरमर्द्दिनि च युद्धपूर्व्वप्रिये तथा ।
त्रासयद्वितयञ्चास्त्रं देवसिद्धसुपूजिते ॥ ६८ ॥

(१) "वियदर्णयुतम्" इति पाठान्तरम् ।

नन्दिन्यन्ते रक्षयुगं महायोगेश्वरीति च ।
शूलिन्याद्यश्च पञ्चाङ्गं हुं फडन्तमितीरितम् ।
अङ्गकर्म्मैव रक्षाकृत् प्रोक्तं ग्रहनिवारणम् ॥ ६८ ॥
बिभ्राणा शूलबाणास्यरिसदरगदा चापपाशान् कराब्जै
र्मेघश्यामा किरीटोल्लसितशशिकलाभीषणा भूषणाढ्या ।
सिंहस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता
कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसिनी शूलिनी वः ॥ ७० ॥

एवं विचिन्त्य पुनरक्षरलक्षमेनं मन्त्री जपन् प्रजुहुयाच्च दशांशतोऽन्ते ।
प्राज्येन साज्यहविषा प्रयजीच्च देवीमङ्गाष्टशक्तिनिजहेतिदिशाधिनाथैः ॥ ७१॥

दुर्गा च वरदा विन्ध्यवासिन्यसुरमर्द्दिनी ।
युद्धप्रिया वेदसिद्धपूजिता नन्दिनी तथा ॥ ७२ ॥
महायोगेश्वरी चाष्ट शक्तयः समुदीरिताः ।
रथाङ्गशङ्खासिगदाबाणकार्मुकसंज्ञकाः ॥ ७३ ॥
सशूलपाशा यष्टव्या दिक्क्रमादष्ट हेतयः ।
दीक्षाजपहुतार्च्चाभिः सिद्धः कर्म्म समाचरेत् ।
आमयोन्मादभूतापस्मारक्ष्वेलशमादिकम् ॥ ७४ ॥

उद्गूर्णैः प्रहरणकैरुदीर्णवेगैः शूलाद्यैर्निजमथ शूलिनीं विचिन्त्य ।
आविश्य क्षणमिव जप्यमानमन्त्रस्यावृत्त्या द्रुतमपयान्ति भूतसङ्घाः ॥ ७५ ॥

अन्तराथ पुनरात्मरोगिणोरम्बिकामपि निजायुधाकुलाम् ।
संविचिन्त्य जपतोऽरिमुद्रया विद्रवन्त्यवशविग्रहा ग्रहाः ॥ ७६ ॥
अहिमूषिकवृश्चिकादिजं वा बहुपात्कुक्कुरलूतिकोद्भवं वा ।
विषमाशु विनाशयेन्नराणां प्रतिपन्नैव (१) च विन्ध्यवासिनी सा ॥७७॥
आधाय वाणि निशिते च देवीक्षेमङ्करीमन्त्रमिमं जपित्वा ।
तद्वेधनादेव विपक्षसेना दिशो दिशो धावति (२) नष्टसंज्ञा (३) ॥७८

---

(१) "प्रतिपन्नैव" इति पाठान्तरम् ।
(२) "नष्टसेना" इति पाठान्तरम् ।

आत्मानमार्य्यां प्रतिपद्य शूलपाशान्वितां वैरिवलं प्रविश्य ।
मन्त्रं जपन्नाशु परायुधानि गृह्णाति मुष्णाति च बोधमेषाम् ॥ ७९ ॥
तिलसिद्धार्थैर्जुहुयाल्लक्षं मन्त्री सपत्ननामयुतम् ।
स तु रोगाभिहतात्मा मृतिमेति न तत्र सन्देहः ॥ ८० ॥
त्रिमधुरसिक्तैश्च तिलैरष्टसहस्रं जुहोति योऽनुदिनम् ।
अप्रतिहतास्य शक्तिर्भूयात् प्रागेव वत्सरतः ॥ ८१ ॥
सर्पिषाष्टशतहोमतोऽमुना वाञ्छितं सकलमब्दतो भवेत् ।
दूर्व्वया त्रिकयुजेप्सितं लभेत् सम्यगष्टशतसंख्यया हुतात् ॥ ८२ ॥
क्षुरिकाक्तपाणनखरा मन्त्रेणानेन साधु संजप्ताः ।
सम्पाताज्यसुसिक्ता अप्रतिहतशक्तयो भवन्ति युधि ॥ ८३ ॥
गोमयविहितां गुलिकां जुहुयाच्छतमष्टपूर्व्वकं मन्त्री ।
दिवसैः सप्तभिरिष्टौ द्विष्टौ मिथो वियोगिनौ भवतः ॥ ८४ ॥
असृष्टकं गोमयमन्तरिक्षे संगृह्य जप्त्वा त्रिसहस्रमानम् ।
यियासतां वै निखनेन्नराणां संस्तम्भनं द्वारि चमूमुखे च ॥ ८५ ॥
पानीयाम्बःपाणिमार्य्यां प्रसन्नां ध्यात्वा ग्रामं वा पुरं वापि गच्छन् ।
जप्त्वा मन्त्रं तर्पयित्वा प्रविष्टो मृष्टं भोज्यं प्राप्नुयाद्भृत्यवर्गैः ॥ ८६ ॥

आर्कैर्मन्त्री त्रिमधुरयुतैरेकसाहस्रमिध्मै-(१)
राश्वत्थैर्व्वा त्वतिविशदचेतास्तिलैर्व्वा जुहोति ।
यानुद्दिश्य त्ववहितमनास्तन्मयः सम्यगग्नौ
ते वश्याः स्युर्व्विधुरितधियो नात्र कार्य्यो विचारः ॥ ८७ ॥

कुर्य्यात् प्रयोगानपि दावदुर्गाकल्पोदितान् वै मनुनाऽमुना च ।
मन्त्री जपार्च्चाहुततर्पणान्ता(२)न्नाल्पो हि मन्त्रोरनयोर्व्विशेषः ॥ ८८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे चतुर्दशः पटलः ॥ * ॥

---

(१) "एकसाहस्रम्" इत्यत्र "अर्कसाहस्रम्" इति पाठान्तरम् ।
(२) "तर्पणाद्या नाल्पो हि" इति पाठान्तरम् ।

## पञ्चदशः पटलः ।

अथ कथयिष्ये मन्त्रं चतुरक्षरसंज्ञकं समासेन ।
प्रणवो भुवनाधीशादष्ठिखमस्यादिको विसर्गान्तः ॥ १ ॥
ऋषिरस्याऽजश्छन्दो गायत्रञ्च देवता च भुवनेशी ।
अङ्गानि षट् क्रमेण प्रोक्तानि प्रणवशक्तिवीजाभ्याम् ॥ २ ॥
भास्वद्रत्नौघमौलिस्फुरदमृतरुचो रञ्जयच्चारुरेखां (१)
सद्यः सन्तप्तकार्त्तस्वरकमलजवाभासुराभिः प्रभाभिः ।
विश्वाकाशावकाशं ज्वलयदघिशिरं धर्तृ पाशाङ्कुशेष्टा-
भीतीनां भङ्गितुङ्गस्तनमवतु जगत् मातुरार्कं वपुर्व्वः ॥ ३ ॥
संदीक्षितोऽथ प्रजपेच्च मन्त्रं मन्त्री पुनर्लक्षचतुष्कमेनम् ।
पुष्पैस्तदन्ते द्विजवृक्षजातैः स्वादुप्लुतैर्व्वा जुहुयात् सरोजैः ॥ ४ ॥
मनोरथार्कात्मतया त्वनेन प्रवर्त्त्यतेऽर्घ्योपहिता प्रपूजा ।
समे सुमृष्टे रचयेद्विविक्ते शुद्धे तले स्थण्डिलमङ्गणस्य ॥ ५ ॥
प्रयजेदथ प्रभूतां विमलां साराह्वया समाराध्याम् ।
परमसुखामग्न्यादिष्वस्त्रिषु मध्ये च पीठक्लृप्तेः प्राक् ॥ ६ ॥
ह्रस्वत्रयक्लीववियोजिताभिः क्रमात् कृशान् विन्दुयुताभिरज्भिः ।
सहाभिपूज्या नव शक्तयः स्युः प्रद्योतनाः प्राज्यतरप्रभावाः ॥ ७ ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्व्विमला तथा ।
अमोघा विद्युता चैव नवमी सर्व्वतोमुखी ॥ ८ ॥
ब्रह्मविष्णुशिवात्मकं समीर्य्य सौराय योगपीठाय ।
प्रोक्तेति नतिमपि पुनः समापयेत् पीठमन्त्रमहिमरुचेः ॥ ९ ॥

---

(१) "व्यञ्जयच्चारुरेखाम्" इति पाठान्तरम् ।

आवाह्य हार्लेखिकमर्कमर्घ्यपाद्याचमाद्यैर्मधुपर्कयुक्तैः ।
प्रपूजयेदावरणैः समस्तसम्पत्त्यवाप्त्यै तदधीनचेताः ॥ १० ॥
हृल्लेखाद्याः पञ्च यष्टव्यास्त्वङ्गैः (१) स्तदनु मातृभिः पश्चात् ।
अङ्गाराद्यैराशापालैरभ्यर्चयेत् क्रमान्मन्त्री ॥ ११ ॥
प्रतिपूज्य शक्तिमिति तत्र पुरः प्रणिधाय (२) ताम्ररचितं चषकम् ।
प्रजपन्मनुं प्रतिगतक्रमतः परिपूरयेत् सुविमलैः सलिलैः ॥ १२ ॥
अक्षतयवकुशदूर्वातिलसर्षपकुसुमचन्दनोपेतैः ।
अस्यग्राह्यच्छिद्रं स्वैक्यं सम्भावयन् समाहितधीः ॥ १३ ॥

दृष्ट्वा दिनेशमथ पीठगतं तथैव
व्योमस्थितं परिवृतावरणं विलोक्य ।
अष्टोत्तरं शतमथ प्रजपेन्मनुन्तं
पूर्णोदकं निजकरेण पिधाय पात्रम् ॥ १४ ॥

भूयोऽभ्यर्च्य सुधामयं जलमथो तद्गन्धपुष्पादिभि
र्जानुभ्यामवनिं गतश्चषकमभ्यामस्तकं प्रोद्धरन् ।
दद्यान्मण्डलबद्धदृष्टिहृदयो भक्त्यार्घ्यमोजोवल-
ज्योतिर्दीप्तियशोधृतिस्मृतिकरं (३) लक्ष्मीप्रदं भास्वते ॥ १५ ॥
अथ कृतपुष्पाञ्जलिरपि पुनरष्टशतं जपेन्मनुमिमं मन्त्री ।
यावद्रश्मिषु भानोर्व्याप्नोत्यम्भः (४) सुधामयं तदपि ॥ १६ ॥
अमृतमयजलावसिक्तगात्रो दिनपतिरप्यमृतत्वमातनोति ।
धनविभवसुदारपुत्रमित्रपशुगणजुष्टमनन्तभोगयोगि ॥ १७ ॥
तस्मादिनाय दिनशो ददताद्दिनादौ दैन्यापनोदितनवे दिनवल्लभाय ।
अर्घ्यं समग्रविभवस्त्वथवार्कवारे पारं स गच्छति भवाह्वयवारिराशेः ॥१८॥

---

(१) "हृल्लेखाद्यैः पञ्चभिरिष्टाङ्गैः" इति पाठान्तरम् ।
(२) "प्रविधाय" इति पाठान्तरम् ।
(३) "ज्योतिर्दीप्तियशोऽखिलस्मृतिकरम्" इति वा पाठः ।
(४) "प्राप्नोत्यम्भः" इति पाठान्तरम् ।

अनुदिनमर्च्चयितव्यं पुंसां विधिनाऽमुनाथवा रवये ।
दद्यादर्घ्यद्वयमपि कुर्य्याद्वाञ्छितार्थसमवाप्त्यै ॥ १९ ॥

एकीकृत्य समस्तवस्त्वनुगतानादित्यचन्द्रानलान्
वेदाद्येन गुणात्मकेन सगुणानाकृष्य हृल्लेखया ।
सर्व्वं तत्प्रतिमथ्यतामपि समावष्टभ्य हंसात्मना
नित्यं शुद्धमनन्यमक्षरपदं मन्त्री भवेद्योगतः ॥ २० ॥

अथ वदाम्यजपामनुमुत्तमं सकलसंसृतियापनसाधनम् ।
दुरितरोगविषापहरं नृणामिह परत्र च वाञ्छितसिद्धिदम् ॥ २१ ॥

विष्णुपदं ससुधाकरखण्डं चन्द्रयुगावधिकं वतुरीयम् ।
क्षेत्रविदो मनुरेष समुक्तो यं प्रजपत्यपि सन्ततमात्मा ॥ २२ ॥

ऋष्याद्या ब्रह्मदेव्यादिगायत्रीपरमात्मकाः ।
हसाऽक्षीवकलादीर्घयुजाऽङ्गानि समाचरेत् ॥ २३ ॥

अरुणकनकवर्णं पद्मसंस्थञ्च गौरी-
हरनियमितचिह्नं सौम्यतानूनपातम् ।
भवतु भवदभीष्टप्राप्तये पाशटङ्का-
भयवरदविचित्रं रूपमर्द्धाम्बिकेशम् ॥ २४ ॥

प्रजपेद्वादशलक्षं मनुमिममाज्यान्वितैश्च दौग्धान्नैः ।
तावत् सहस्रमानं जुहुयात् सौरे समर्च्चनापीठे ॥ २५ ॥

निक्षिप्य कलशमस्मिन् पूर्व्वोक्तानामपामथैकेन ।
आपूर्य्य चोपचर्य्य च विद्वानङ्गैः प्रपूजयेत् पूर्व्वम् ॥ २६ ॥

ऋतवसुवरनरसंज्ञास्तथर्त्तुगोवह्निपूर्व्विकाजान्ताः ।
आशोपाशाख्येयास्ततो दिशापास्ततश्च वज्राद्याः ॥ २७ ॥

इति परिपूज्य च कलशं पुनरभिषिच्याथ नियमतोऽर्घ्यमपि ।
दद्यादिनाय चैहिकपारत्रिकसिद्धये चिरं मन्त्री ॥ २८ ॥

इन्दुद्वयोदितसुधारसपूर्णसार्णसम्बद्धविन्दुसुसमेधितमादिवीजम् ।
संचिन्त्य यो मनुमिमं भजते मनस्वी स्वात्मैक्यतोऽथ दुरितैः प्रतिमुच्यतेऽसौ ॥२९॥

व्योमानुगेन वसुधाम्बुमुचा सदामा प्रद्योतमानसविनिःसृतशीतरुग्भ्याम् ।
आराधिता दहनचन्द्रलसन्महोभ्यां रोगापमृत्युविषदाहरुजः प्रयान्ति ॥ ३० ॥

हंसाण्डाकाररूपं स्रुतपरमसुधं मूर्द्धचन्द्राज्ज्वलन्तं
नीत्वा सौषुम्नमार्गं निशितमतिरथ व्याप्तदेहोपगात्रम् ।
स्मृत्वा संजप्य मन्त्रं पलितविषशिरोरुग्ज्वरोन्मादभूता-
पस्मारादींश्च मन्त्री हरति दुरितदौर्भाग्यदारिद्र्यदोषैः ॥ ३१ ॥

विधाय लिपिपङ्कजं मनुयुतोल्लसत्कर्णिकं
निधाय घटमत्र पूरयतु वारिणा तन्मुखम् ।
पिधाय शशिनात्ममन्त्रयुतवामदोष्णा पुनः
सुधायितरसैः स्वसाध्यमभिषिचयेत्तज्जलैः ॥ ३२ ॥

नारी नरो वा विधिनाभिषिक्तो मन्त्रेण तेनेति विषद्वयोत्थैः ।
रोगैस्तथाधिप्रभवैर्विमुक्तश्चिराय जीवेत्करणैर्विशुद्धैः ॥ ३३ ॥

करेण तेनैव जलाभिपूर्णं प्रजप्य मन्त्री करकं पिधाय ।
सुधायितैस्तैर्विषिणं निषिञ्चेद्विषं निहन्यादपि कालकूटम् ॥ ३४ ॥

गदितं निजपाणितलं विषिणः शिरसि प्रविधाय जपेज्जलैः शितधीः ।
अचिरात् प्रतिमोचयते विषतो मत्रिमानथ तक्षकदष्टमपि ॥ ३५ ॥

इत्यजपामन्त्रविधिः सम्प्रोक्तः संग्रहेण मन्त्रविदाम् ।
यं प्राप्य सकलवसुसुखधर्म्मयशोभुक्तिमुक्तिभाजः स्युः ॥ ३६ ॥

अरुणा शिखिदीर्घयुता हृल्लेखा श्वेतया युताऽनन्ता ।
प्रोक्तः प्रयोजनानां तिलकस्तु यथार्थवाचको मन्त्रः ॥ ३७ ॥

गुह्यादाचरणतलं कण्ठादागुह्यमागलङ्कान्तात् ।
विन्यस्य मन्त्रवर्णान् क्रमेण मन्त्री करोतु वाङ्गविधिम् ॥ ३८ ॥

मन्त्रस्य मध्यमनुना दीर्घयुजाऽङ्गानि चेह कथितानि ।
ध्यायेत् पुनरहिमकरं मन्त्री निजवाञ्छितार्थलाभाय ॥ ३९ ॥

अरुणसरोरुहसंस्थस्त्रिदृगरुणोऽरुणसरोजयुगलधरः ।
करकलिताभयवरदो द्युतिविम्बोऽमितभूषणस्त्विनोऽवतु वः ॥ ४० ॥

कृतसन्ध्योचो मन्त्री दिनकरलक्षं मनुं जपेज्जुहुयात् ।
तावत्सहस्रमन्त्रैः सघृतैर्व्वा त्रिमधुराप्लुतैश्च तिलैः ॥ ४१ ॥
प्रागभिहितेन विधिना पीठाद्यं प्रतिविधाय तत्र पुनः ।
विन्यस्य कलशमस्मिन् प्रपूजयेत्तरणिमपि सावरणाम् ॥ ४२ ॥
अङ्गैः प्रथमावरणं ग्रहैर्द्वितीयं तृतीयमाशेशैः ।
मुख्यतरगन्धसुमनोधूपाद्यैः कृतभक्तिनम्रमनाः ॥ ४३ ॥
प्रागादिदिशासंस्थाः शशिबुधगुरुभार्गवाः क्रमेण स्युः ।
आग्नेयादिष्वस्त्रिषु धरणिजमन्दाहिकेतवः पूज्याः ॥ ४४ ॥
शुभ्रसितपीतशुक्ला रक्तासितधूम्रकृष्णकाः क्रमशः ।
चन्द्राद्याः केत्वन्ता वामोरुन्यस्तवामकरलसिताः ॥ ४५ ॥
अपरकराभयमुद्रा विकृतमुखोऽहिः कराहिताञ्जलियुक् ।
दंष्ट्रोग्रास्यो मन्दः सवर्ण-(१)सदृशांशुकादिभूषश्च ॥ ४६ ॥
संपूज्यैवं विधिना विधिवत् गोरोचनादिकैर्द्रव्यैः ।
दद्यादर्घ्यं रवये मन्त्री निजवाञ्छितासये मुक्त्यै ॥ ४७ ॥
गोरोचनासतिलवेणवराजिरक्तशीताख्यशालिकरवीरजवाकुशाग्रान् ।
श्यामाकतण्डुलयुतांश्च यथाप्रलाभं संयोज्य भक्तिभरतोऽर्घ्यविधिर्विधेयः ॥ ४८ ॥
कृत्वा मण्डलमष्टपत्रलसितं तत्कर्णिकायां तथा
पत्राग्रेषु विधाय कुम्भनवकं तत्पूरयित्वा जलैः ।
आवाह्य क्रमशो ग्रहानभिसमाराध्याभिषेकक्रियां
कुर्य्याद्यो ग्रहवैकृतानि विलयं यान्त्यस्य लक्ष्मीर्भवेत् ॥ ४९ ॥
ग्रहपरिहृतमिष्ट्वा पूर्व्वक्लृप्त्या दिनेशं
प्रतिजुहुत निजर्क्षे वैकृते वै ग्रहाणाम् ।
शुभमतिरुपरागे चन्द्रभान्वोः स्वभे वा
रिपुनृपजभये वा घोररूपे गदे वा ॥ ५० ॥

---

(१) "सुवर्ण" इति पाठान्तरम् ।

अर्कद्विजाङ्घ्रिपमयूरकपिप्पलाह्वाः
सोदुम्बराः खदिरशम्यभिधाः सदूर्व्वाः ।
दर्भाह्वयाश्च समिधोऽष्टशतं क्रमेण
सव्याहृतीनि घृतहव्यहुतानि होमः (१) ॥ ५१ ॥

आज्याहुत्या त्वथादावन्ते च व्याहृतिभिरपि जुहुयात् ॥ ५२ ॥

सोमादीनां दिशि दिशि समाधाय वह्निं यथाव-
द्धोमे सम्यक्कृतवति मुदं यान्ति सर्व्वे ग्रहाश्च ।
युद्धे सम्यग्जयमपि रुजः शान्तिमायुश्च दीर्घं
कृत्याशान्तिं व्रजति पुनरेकत्र वा सर्व्वहोमः ॥ ५३ ॥

अमुना विधिनार्च्चनाहुताद्यैः प्रभजेद्यो दिनशो नरो दिनेशम् ।
मणिभिः स धनैश्च धान्यवर्गैः (२) परिपूर्णावसथो भवेच्चिराय ॥ ५४ ॥

त्वद्यन्त आर्थ्य सूष्वर्णा मेधा रेचिक्रया गुणाः ।
व्यत्ययोऽष्टाक्षरः प्रोक्तः सौरः सर्व्वार्थसाधकः ॥ ५५ ॥
देवभाग ऋषिस्तस्य गायत्री छन्द उच्यते ।
आदित्यो देवता चास्य कथ्यन्तेऽङ्गान्यतो मनोः ॥ ५६ ॥
सत्यब्रह्मविष्णुरुद्रैः साग्निभिः सर्व्वसंयुतैः ।
तेजोज्वालामणिहुंफट्स्वाहान्तैरङ्गमाचरेत् ॥ ५७ ॥

आदित्यं रविभानू भास्करसूर्य्यौ न्यसेत् स्वरैर्लघुभिः ।
सशिरोमुखहृद्गुह्यकचरणेषु क्रमश एव मन्त्रितमः ॥ ५८ ॥
सशिरोमुखगलहृदयोदरनाभिशिश्नाङ्घ्रिषु प्रविन्यसेत् ।
प्रणवाद्यैरष्टार्णैः क्रमेण सोऽयं तदक्षरन्यासः ॥ ५९ ॥
अरुणोऽरुणपङ्कजे निषण्णः कमलेऽभीतिवरौ करैर्दधानः ।
स्वरुचाहितमण्डलस्त्रिनेत्रो रविराकल्पशताकुलोऽवताद्वः ॥ ६० ॥

---

(१) "सर्पिर्हविर्दधियुताः पृथगेव च स्रुः" इति पाठान्तरम् ।
(२) "धान्यवर्गैः" इत्यत्र "धान्यरत्नैः" इति पाठान्तरम् ।

संदीक्षितोऽथ मन्त्री मन्त्रं प्रजपेच्च वर्णलक्षान्तम्।
जुहुयात्त्रिमधुरसिक्तैर्दुग्धतरुसमिद्वरैर्व्वसुसहस्रम् ॥ ६१ ॥
अथवा सघृतैरन्नैः समर्च्चयेन्नित्यशोऽर्घ्यमपि दद्यात्।
पूर्व्वोक्त एव पीठे कुम्भं प्रणिधाय साधु संपूर्य्य ॥ ६२ ॥
शुद्धाद्भिररुणवासोयुगेन संवेष्ट्य पूजयेत् क्रमशः।
अङ्गावृतेः परस्तादादित्याद्यैरुषादिशक्तियुतैः ॥ ६३ ॥
मातृभिररुणान्ताभिः सग्रहैः सुरैश्चान्ते सूर्य्यपार्षद्भिः।
सोषा सप्रज्ञा सप्रभा (१) सन्ध्या च शक्तयः प्रोक्ताः ॥ ६४ ॥
संपूज्यैवं दिनेशं पटुमतिरथ जप्वा च हुत्वाभिषेकं
कृत्वा दत्त्वेनसंख्यं वसुमपि गुरवे सांशुकं भोजयेच्च।
विप्रानादित्यसंख्यानिति विहितमनुर्नित्यशोऽर्घ्यञ्च दद्यात्
वारि वा भास्करीये शुभतरचरितो वल्लभाय ग्रहाणाम् ॥ ६५ ॥
इतीह दिनकृन्मनुं भजति नित्यशो भक्तिमान्
य एष निचितेन्द्रिरो भवति नीरुजो वत्सरात्।
समस्तदुरितापमृत्युरिपुभूतपीड़ादिका-
नपास्य स सुखी स जीवति परञ्च भूयात् पदम् ॥ ६६ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे पञ्चदशः पटलः ॥ * ॥

---

(१) "षोड़ा सप्रज्ञा सप्रभा" इति पाठान्तरम्।

# षोड़शः पटलः ।

—०००—

अथ चन्द्रमनुं वक्ष्ये सजपार्चाहुतादिकम् ।
हिताय मन्त्रिणां सार्घ्यविधानञ्च समासतः ॥ १ ॥
भृगुः सषत्वः सार्द्धेन्दुर्व्विन्दुहीनः पुनश्च सः ।
विषानन्तो मान्तनती मन्त्रोऽयं सोमदैवतः ॥ २ ॥ (१)
दीर्घभाजा स्वबीजेन कुर्य्यादङ्गानि वै क्रमात् ।
विचिन्तयेत् पुनर्मन्त्री यथावन्मन्त्रदेवताम् ॥ ३ ॥

विमलकमलसंस्थः सुप्रसन्नाननेन्दु-
र्व्वरदकुमुदहस्तश्चारुहारादिभूषः ।
स्फटिकरजतवर्णो वाञ्छितप्राप्तये वो
भवतु भवदभीष्टद्योतिताङ्कः (२) शशाङ्कः ॥ ४ ॥

दीक्षितः प्रजपेन्मन्त्री रसलक्षं मनुं वशी ।
पञ्चमी दशमी पञ्चदशीषु तु विशेषतः ॥ ५ ॥
अयुतं प्रजपेन्मन्त्री सायाह्नेऽभ्यर्च्य भाधिपम् ।
पयोऽन्नेन हुनेद्भूयः सघृतेन सहस्रकम् ॥ ६ ॥
ससर्पिषा पायसेन षट्सहस्रं हुनेत् पुनः ।
पीठक्लृप्तौ तु सोमान्तं परिपूज्यार्च्चयेद्विधुम् ॥ ७ ॥
राका कुमुद्वती नन्दा सुधा सञ्जीवनी क्षमा ।
आप्यायनी चन्द्रिका चाह्लादिनी नव शक्तयः ॥ ८ ॥

---

(१) पुस्तकान्तरे द्वितीयश्लोकात् परं श्लोकोऽयं दृश्यते—
"ऋषिरत्रिः समाख्यातः पङ्क्तिश्छन्दः प्रकीर्त्तितम् ।
सोमो देवश्च सों वीजं स्वापः शक्तिरुदीरिता" ॥
(२) "भजदभीष्टद्योतिताङ्कः" इति पाठान्तरम् ।

केसरेष्वङ्गपूजा स्याच्छक्तीस्तद्वहिरर्च्चयेत् ।
रोहिणीं कृत्तिकाख्याञ्च रेवतीं भरणीं तथा ॥ ९ ॥
रात्रिमार्द्राह्वयां ज्योत्स्नां कलाञ्च क्रमतोऽर्च्चयेत् ।
दलाग्रेषु ग्रहानष्टौ दिशानाथाननन्तरम् ॥ १० ॥
सुसितैर्गन्धकुसुमैः पात्रै रूप्यमयैस्तथा ।
शक्तयः फुल्लकुन्दाभास्तारहारविभूषणाः ॥ ११ ॥
सितमाल्याम्बरालेपा रचिताञ्जलयो मताः ।
इति सिद्धमनुं (१) मन्त्री शशिनं मूर्द्ध्नि चिन्तयन् ॥ १२ ॥
त्रिसहस्रं जपेद्रात्रौ मासान्मृत्युञ्जयो भवेत् ।
हृदयाम्भोजसंस्थं तं भावयन् प्रजपेन्मनुम् ॥ १३ ॥
राज्यैश्वर्य्यं वत्सरेण प्राप्नुयादप्यकिञ्चनः ।
आहाराचारनियतो जपेल्लक्षचतुष्टयम् ॥ १४ ॥
असंशयतरं तेन निधानादि च लभ्यते ।
घोरज्वरगराः शीर्षरोगाः कृत्याश्च कामलाः ॥ १५ ॥
तन्मन्त्रायुतजापेन नश्यन्ति सकलापदः ।
नित्यशः प्रजपेन्मन्त्रं पूर्णासु विजितेन्द्रियः ॥ १६ ॥
जपेन्मनुं यथाशक्ति लक्ष्मीसौभाग्यसिद्धये ।
त्रितयं मण्डलानान्तु कृत्वा पाश्चात्यपौर्व्विकम् ॥ १७ ॥
आसीनः पश्चिमे मध्यसंस्थे द्रव्याणि विन्यसेत् ।
पूर्व्वस्मिन् पङ्कजोपेते पूर्व्ववत् सोममर्च्चयेत् ॥ १८ ॥
राकायामुदये राज्ञो निजकार्य्यं विचिन्तयेत् ।
संस्थाप्य राजतं तत्र चषकं परिपूरयेत् ॥ १९ ॥
गव्येन शुद्धपयसा स्पृष्टपात्रो जपेन्मनुम् ।
अष्टोत्तरशतावृत्त्या दद्यादर्घ्यमथैन्दवे ॥ २० ॥

(१) "सिद्धमनुः" इति पाठान्तरम् ।

विद्यामन्त्रेण मन्त्रज्ञो यथावत्तद्गतात्मना ।
विद्ये विद्यापदे प्रोक्ता मालिनीति च चन्द्रिणि ॥ २१ ॥
चन्द्रमुख्यग्निजायाञ्च निगदेत् प्रणवादिकम् ।
प्रतिमासञ्च षण्मासात् सिद्धिमेर्ष्यति काङ्क्षिताम् ॥ २२ ॥
इष्टाय दीयते कन्या कन्यां विन्देन्निजेप्सिताम् ।
अमितां श्रियमाप्नोति कान्तिं पुत्रान् यश: पशून् ।
सोमार्घ्यदाता लभते दीर्घमायुश्च विन्दति ॥ २३ ॥
इति सोममन्त्रविधि: प्रणिगदित: संग्रहेण मन्त्रविदाम् ।
उपकृतयेऽमितलक्ष्म्यै मेधायै प्रेत्य चेह सम्पत्त्यै ॥ २४ ॥
अथाग्निमन्त्रानखिलार्थसिद्धिप्रदान् प्रवक्ष्ये जगतो हिताय ।
सप्तार्चिरादिकृतीनपि साङ्गभेदान् सार्चाविशेषान् सजपादिकांश्च ॥ २५ ॥
वियतो दशमोऽर्घिसर्गयुक्तो भवसर्गौ भृगुलान्तषोड़शाच: ।
हुतभुग्दयिता ध्रुवादिकोऽयं मनुरुक्त: सुसमृद्धिद: कृशानो: ॥ २६ ॥
भृगुरपि तदृषिश्छन्दो गायत्री देवताग्निरुद्दिष्ट: ।
प्राक्प्रोक्तान्यङ्गानि द्विश: समुक्तैश्च मन्त्रवाक्यैर्वा ॥ २७ ॥
शक्तिस्वस्तिकपाशान् साङ्कुशवरदाभयान् दधत्त्रिमुख: ।
मुकुटादिविविधभूषोऽवताच्चिरं पावक: प्रसन्नो व: ॥ २८ ॥
जपेदिमं मनुमृतुलक्षमादराद्दशांशत: प्रतिजुहुयात् पयोन्धसा ।
ससर्पिषाप्यसिततरैश्च षाष्टिकै: समर्चयेदथ विधिवद्विभावसुम् ॥ २९ ॥
पीता श्वेताऽरुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ।
रुचिरा ज्वालिनी चेति कृशानोर्नव शक्तय: ॥ ३० ॥
पीठे तनूनपात: प्रागङ्गैरष्टमूर्त्तिभिस्तदनु ।
भूयश्च शतमखाद्यैर्विधिनाथ हिरण्यरेतसं प्रयजेत् ॥ ३१ ॥
आज्यैरष्टोर्द्धशतं प्रतिपदमारभ्य मन्त्रविद्दिनश: ।
चतुरो मासान् जुहुयात् लक्ष्मीरत्यायता भवेत्तस्य ॥ ३२ ॥

शुद्धाभिः शालीभिर्द्दिनमनुजुहुयादथाब्दमात्रेण ।
शाली शालिगृहं स्याद्गोमहिष्याद्यैश्च संकुलं तस्य ॥ ३३ ॥
शुद्धान्नैर्घृतसिक्तैः प्रतिदिनमग्नौ समेधिते जुहुयात् ।
अन्नसमृद्धिर्म्महती स्यादस्य निकेतनेऽब्दमात्रेण ॥ ३४ ॥
जुहुयात्तिलैः सुशुद्धैः षण्मासाज्जायते महालक्ष्मीः ।
कुमुदैः सकह्लारैरपि जातीकुसुमैश्च जायते सिद्धिः ॥ ३५ ॥
पालाशैः पुनरिध्मकैः सरसिजैर्वैल्वैश्च रक्तोत्पलै-
र्दुग्धैर्व्वीरुहसम्भवैः खदिरजैर्व्याघातवृक्षोद्भवैः ।
दूर्व्वाख्यैश्च शमीविकङ्कतभवैरष्टोर्द्ध्वयुक्तं शतं
नित्यं वा जुहुयात् प्रतिप्रतिपदं मन्त्री महासिद्धये ॥ ३६ ॥

तारव्याहृतयश्चाग्ने जातवेद इहावह ।
सर्व्वकर्म्माणि चेत्युक्त्वा साधयाऽग्निवधूर्मनुः ॥ ३७ ॥

ऋष्याद्याः पूर्व्वोक्ता मन्त्रेणाङ्गानि वर्णभिन्नेन ।
भूतर्त्तुकरणेन्द्रियगुणयुग्मैर्मन्त्रवर्णकैस्तदपि ॥ ३८ ॥
अथवा शक्तिस्वस्तिकदर्भांचस्रक्स्रुवस्रुगभयवरान् ।
दधदमिताकल्पो वो वसुरवतात् कनकमालिकालसितः ॥ ३९ ॥

वत्सरादेश्चतुर्द्दश्यां दिनादावेव दीक्षितः ।
मन्त्रं द्वादशसाहस्रं जपेत् सम्यगुपोषितः ॥ ४० ॥
अर्च्चयेदङ्गमूर्त्तीश्च लोकेशकुलिशादिभिः ।
समिदाज्यममायां हि परिशोध्य यथाविधि ॥ ४१ ॥
ब्राह्मणान् भोजयित्वाथ स्वयं भुक्त्वा समाहितः ।
परेऽह्नि प्रतिपद्येतैर्जुहुयादर्च्चितेऽनले ॥ ४२ ॥
मन्त्री वटसमिद्व्रीहितिलराजीहविर्घृतैः ।
अष्टोत्तरशतावृत्त्या हुनेदेकैकशः क्रमात् ॥ ४३ ॥
दशाहमेवं हुत्वा तु पुनरेकादशीतिथौ ।
शक्त्या प्रतर्प्य विप्रांश्च प्रदद्याद्गुरुदक्षिणाम् ॥ ४४ ॥

सुवर्णवासोधान्यानि शोणां गाञ्च सतर्णकाम् ।
पुनरष्टोत्तरं मन्त्री सहस्रं दिनशो जपेत् ॥ ४५ ॥

विधिनेति विधातुरग्निपूजामचिरेणैव भवेन्महासमृद्धिः ।
धनधान्यसुवर्णरत्नपूर्णा धरणी गोवृषपुत्त्रमित्रकीर्णा ॥ ४६ ॥

प्रजपेदथवा सहस्रसंख्यं दिनशो वत्सरतो भवेन्महाश्रीः ।
जुहुयात् प्रतिवासरं शताख्यं हविषाब्देन भवेन्महासमृद्धिः ॥ ४७ ॥

पालाशैः कुसुमैर्हुनेद्दधिघृतक्षौद्राप्लुतैर्मण्डलं
नित्यं साष्टशतैस्तथैव करवीरोत्थैः समृद्धैर हुनेत् ।
षण्मासं कपिलाघृतेन दिनशोऽप्यष्टौ सहस्रन्तथा
होतव्यं लभते स राज्यसद्दशीं लक्ष्मीं यशो वा महत् ॥ ४८ ॥

उत्पूर्व्वात्तिष्ठशब्दात् पुरुषहरिपदे पिङ्गलान्ते निगद्य
प्रोक्त्वाथो लोहिताख्यं पुनरपि च वदेत् देहि मेदात् क्रमेण ।
भूयो ब्रूयात्तथा दापय शशियुगलार्णाश्चतुर्व्विंशदर्णः
प्रोक्तो मन्त्रोऽखिलेष्टप्रतरणसुरसद्माङ्घ्रिपः स्यात् कृशानोः ॥ ४९ ॥

ऋष्याद्याः स्युः पूर्व्ववद्वेतुभूतदिशात्रिकरणयुगलार्णैः ।
मूलमनुनाऽथ कुर्य्यादङ्गानि क्रमश एव मन्त्रितमः ॥ ५० ॥

हेमाश्वत्थसुरद्रुमोदरभुवो निर्यान्तमश्वाकृतिं
वर्षन्तं धनधान्यरत्ननिचयान् रन्ध्रैः स्वकैः सन्ततम् ।
ज्वालापल्लवितस्वरोमविवरं भक्तार्त्तिसम्भेदनं
वन्दे धर्म्मसुखार्थमोक्षफलदं दिव्याकृतिं पावकम् ॥ ५१ ॥

जप्याच्च लक्षमानं मन्त्री संदीक्षितोऽथ मनुमेनम् ।
जुहुयाच्च तदवसाने घृतसिक्तैः पायसैर्द्दशांशेन ॥ ५२ ॥

अङ्गैर्हुतवहमूर्त्तिभिराशेशैः संयजेत्तदस्त्रैश्च ।
पावकमिति मन्त्रितमो गन्धाद्यैरनुदिनं तमुपहारैः ॥ ५३ ॥

दिनावतारे मनुमेनमन्वहं जपेत् सहस्रं नियमेन मन्त्रवित् ।
अधृष्यतायै यशसे श्रिये रुजां विमुक्तये युक्तमतिस्तथायुषे ॥ ५४ ॥

शालीतण्डुलकैः सितैश्च पयसा हुत्वा हविः पावकं
गन्धाद्यैः परिपूज्य तेन हविषा संवर्त्य पिण्डं महत् ।
आज्यालोड़ितमेकमेव जुहुयाज्जप्त्वा मनुं मन्त्रवित्
साष्टोर्द्धं प्रतिपद्यथो शतमतः स्यादिन्दिरा वत्सरात् ॥ ५५ ॥

अष्टोत्तरं शतमथो मृगमुद्रयैव मन्त्री प्रतिप्रतिपदं जुहुयात्पयोऽन्नैः ।
साज्यैर्भवेन्न खलु तत्र विचारणीयं संवत्सरात् स च निकेतनमिन्दिरायाः ॥५६॥

अष्टोर्द्धं शतं हविषा मन्त्रेणानेन नित्यशो जुहुयात् ।
षण्मासादाढ्यतमो भवति नरो नात्र सन्देहः ॥ ५७ ॥

शालीभिः शुद्धाभिः प्रतिदिनमष्टोत्तरं शतं जुहुयात् ।
धनधान्यसमृद्धः स्यान्मन्त्री संवत्सरार्द्धमात्रेण ॥ ५८ ॥

आज्यैरयुतं जुहुयात् प्रतिमासं प्रतिपदं समारभ्य ।
अतिमहती लक्ष्मीः स्यात्तस्य तु षण्मासतो न सन्देहः ॥ ५९ ॥

अरुणैः पुनरुत्पलैः शतं यो मधुराक्तैः प्रजुहोति वत्सरार्द्धम् ।
मनुनाप्यमुना शताधिकं (१) स प्रलभेन्मङ्क्षु महत्तराञ्च लक्ष्मीम् ॥६०॥

जातीपलाशकरवीरजवाख्यविल्व-
व्याघातकेसरकुरण्टभवैः प्रसूनैः ।
एकैकशः शतमथो मधुरत्रयाक्तै-
र्जुह्वन् प्रतिप्रतिपदं श्रियमेति वर्षात् ॥ ६१ ॥

खण्डैश्च सप्तदिनमप्यमृतालतोत्थै-
र्मन्त्री हुनेद्गुणसहस्रमथो पयोऽक्तैः ।
सम्यक् समर्च्य दहनं त्वचिरेण जन्तु-
श्चातुर्थिकादिविषमज्वरतो वियुज्यात् ॥ ६२ ॥

क्षीरद्रुमत्वगभिपक्वजलैर्यथावत्संपूर्य्य कुम्भमभिपूज्य कृशानुमत्र ।
जप्त्वा मनुं पुनरमुं त्रिसहस्रमात्रं सेकक्रिया ज्वरहरी ग्रहवेकृतघ्नी ॥६३॥

---

(१) "दशाधिकम्" इति पाठान्तरम् ।

पयसि हृदयदघ्ने भानुमालोक्य तिष्ठन्
प्रजपतु च सहस्रं नित्यशो मन्त्रमेनम् ।
स दुरितमपमृत्युं रोगजातञ्च हित्वा
व्रजति नियतसौख्यं वत्सराद्दीर्घमायुः ॥ ६४ ॥

मनुनाऽमुनाऽष्टशतजप्तमथ प्रपिबेज्जलं ज्वलनदीपनकृत् ।
गुरुभुक्तमप्युदरगं त्वमुना परिजापितं पचति कुच्यनलः ॥ ६५ ॥

हुनेदरुणपङ्कजैस्त्रिमधुराप्लुतैर्नित्यशः
सहस्रमृतुमासतः पृथुतरा रमा जायते ।
प्रतिप्रतिपदं हुनेदिति बुधोऽथवा संवत्सरं
विनष्टवसुरप्यसौ भवति चेन्दिरामन्दिरम् ॥ ६६ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे षोडशः पटलः ॥ * ॥

---

## सप्तदशः पटलः ।

अथ संग्रहेण कथयामि मनुमपि महागणेशितुः ।
यं समवहितधियः सुधियः समुपास्य सिद्धिमधिकां प्रपेदिरे ॥ १ ॥
तारः श्रीशक्तिमारावनिगणपतिवीजानि दण्डीनि चोक्ता
पश्चाद्दिन्नं चतुर्थ्यां वरवरदमथो सर्व्वयुक्तं जनञ्च ।
आभाष्य च्चेलमेऽन्तं वशमिति च तथैवानयेति द्विठान्तः
प्रोक्तोऽयं गाणपत्यो मनुरखिलविभूतिप्रदः कल्पशाखी ॥ २ ॥
ऋषिरपि गणकोऽस्य स्याच्छन्दो निहृदन्विता च गायत्री ।
सकलसुरासुरवन्दितचरणयुगो देवता गणाधिपतिः ॥ ३ ॥
प्रणवादिवीजपीठस्थितेन दीर्घस्वरान्वितेन सता ।
अङ्गानि षड्विदध्यान्मन्त्री विघ्नेश्वरस्य वीजेन ॥ ४ ॥
मन्दाराद्यैः कल्पकवृक्षविशेषैर्व्विशिष्टतरफलदैः ।
शिशिरितचतुराशेऽन्तर्व्वालातपचन्द्रिकाकुले च तले ॥ ५ ॥
ऐक्षवजलनिधिलहरीकणजालकवाहिना च गन्धवहेन ।
संसेविते च सुरतरुसुमनःस्थितमधुपपक्षचलनपरेण ॥ ६ ॥
रत्नमये मणिवक्षप्रवालफलपुष्पपल्लवस्य सतः ।
महतोऽधस्तादृतुभिर्युगपत्संसेवितस्य कल्पतरोः ॥ ७ ॥
सिंहमुखपादपीठगलिपिमयपद्मे त्रिषट्कोणोल्लसिते ।
आसीनस्त्वेकरदो वृहदुदरो दशभुजोऽरुणो गजवदनः ॥ ८ ॥

वीजापूरगदेक्षुकार्म्मुकरुजाचक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया च पद्मकरयाश्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविनाशसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥ ९ ॥

करपुष्करधृतकलशस्रुतमणिमुक्ताप्रवालवर्षेण ।
अविरतधारां विकिरन् परितः साधकसमग्रसम्पत्त्यै ॥ १० ॥
मदजललोलुपमधुकरमालां निजकर्णतालताड़नया ।
निर्व्वासयन् मुहुर्मुहुरमरैरसुरैश्च सेवितो युगपत् ॥ ११ ॥
अग्रेऽथ विल्वमभितश्च रमारमेशौ तद्दक्षिणे वटजुषौ गिरिजावृषाङ्कौ ।
पृष्ठेऽथ पिप्पलजुषौ रतिपञ्चवाणौ सव्ये प्रियङ्गुमभितश्च महीवराहौ ॥ १२ ॥

ध्येयौ च पद्मयुगचक्रदरैः पुरोक्तौ
पाशाङ्कुशाख्यपरशूत्तिशिखैरथान्यौ ।
युग्मोत्पलेक्षुमयचापशरैस्तृतीया-
वन्यौ शुकाद्धकलमाग्रगदारथाङ्गैः ॥ १३ ॥

ध्येयाः षट् कोणास्त्रिषु परितः पाशाङ्कुशाभयेष्टकराः ।
सप्रमदा गणपतयो रक्ताकाराः प्रभिन्नमदविवशाः ॥ १४ ॥
अग्रास्त्रावामोदः प्रमोदसुमुखौ च तमभितोऽस्त्रियुगे ।
पृष्ठे च दुर्म्मुखाख्यस्त्वसुमभितोऽविघ्नविघ्नकर्त्तारौ (१) ॥ १५ ॥
सव्यापसव्यभागे तस्य ध्येयौ च शङ्खपद्मनिधी ।
मौक्तिकमाणिक्याभौ वर्षन्तौ धारया धनानि सदा ॥ १६ ॥
सिद्धिसमृद्धी चान्या कान्तिर्मदनावती मदद्रवया ।
द्राविणिवसुधाराख्ये वसुमत्यपि विघ्ननिधियुगप्रमदाः ॥ १७ ॥
ध्यात्वैवं विघ्नपतिं चत्वारिंशत्सहस्रसंयुक्तम् ।
प्रजपेल्लक्षचतुष्कं चतुःसहस्रञ्च दीक्षितो मन्त्री ॥ १८ ॥
दिनमनु सचतुश्चत्वारिंशत्संख्यं सन्तर्पयेद्विघ्नम् ।
उक्तजपान्ते मन्त्री जुहुयाच्च दशांशतोऽष्टभिर्द्रव्यैः ॥ १९ ॥
मोदकपृथुकसलाजाः सशक्तवः सेक्षुनारिकेलतिलाः ।
कदलीफलसहितानीत्यष्ट द्रव्याणि संप्रदिष्टानि ॥ २० ॥

---

(१) "पृष्ठे चतुर्म्मुखाख्यस्तमभितोऽविघ्नविघ्नकर्त्तारौ" इति पाठान्तरम् ।

अनुदिनमर्च्चयितव्यो जपता मनुमपि च मन्त्रिणा गणपः ।
प्राक्प्रोक्तपद्मपीठे सशक्तिके सासिकामनो विधिना ॥ २१ ॥
तीव्रा ज्वालिनी नन्दा सभोगदा कामरूपिणी चोग्रा ।
तेजोवती च सत्या संप्रोक्ता विघ्ननाशिनी नवमी ॥ २२ ॥
सर्व्वयुतं शक्तिपदं प्रोक्का कमलासनाय नम इति च ।
आसनमन्त्रः प्रोक्तो नवशक्त्यन्ते समर्च्चयेदमुना ॥ २३ ॥
आद्या मिथुनैरावृतिरपरा स्यान्निधिभिरपि च षड्विघ्नैः ।
अङ्गैरन्या मातृभिरपरेन्द्राद्यैश्च पञ्चमी पूज्या ॥ २४ ॥
दीक्षाभिषेकयुक्तः प्रजपेत् संपूजयेदिति गणेशम् ।
अभिधीयतेऽस्य च पुनर्गुर्व्वादेशेन मन्त्रिणो दीक्षा ॥ २५ ॥
मध्ये च दिग्दलानां चतुष्टयाग्रे (१) प्रविन्यसेत् कलशान् ।
क्षीरद्रुविल्वरोहिणपिप्पलफलिनीत्वगुद्भवैः क्काथैः ॥ २६ ॥
संपूरयेद्यथावत् क्रमात् समावाह्य गणपतिमिथुनानि ।
अभ्यर्च्च चोपचारैर्हुत्वा विधिवत् पुनः समभिषिञ्चेत् ॥ २७ ॥
इति जपहुतार्च्चनाद्यैः सिद्धो मन्त्रेण कर्म्म कुर्व्वीत ।
अष्टद्रव्यैर्व्वान्यैर्हुनेच्च तत्प्रयोजनावाप्त्यै ॥ २८ ॥

स्वर्णाप्त्यै मधुना च गव्यपयसा गोसिद्धये सर्पिषा
लक्ष्म्यै शर्करया जुहोतु यशसे दध्ना च सर्व्वर्द्धये ।
अन्नैरन्नसमृद्धये च सतिलैर्द्रव्याप्तये तण्डुले-
र्लाजाभिः पतये कुसुम्भकुसुमैः साम्बारिभिर्व्वाससे ॥ २९ ॥
पद्मैर्भूपतिमुत्पलैर्नृपवधूं तन्मन्त्रिणः कैरवै-
रश्वत्थादिसमिद्भिरग्रजमुखान् वर्णान् वधूः पिष्टजैः ।
पुत्तल्यादिभिरन्वहं च वशयेज्जुह्वन्नरानावृष्टये
लोणैर्वृष्टिसमृद्धये च जुहुयान्मन्त्री पुनर्व्वेतसैः ॥ ३० ॥

---

(१) "चतुष्टयाग्रे" इति पाठान्तरम् ।

मन्त्रेणाथ पुराऽमुनैव चतुरावृत्त्या समातर्प्य च
श्रीशक्तिस्मरभूविनायकरतीर्नाम्नैव बीजादिकम् ।
आमोदादिनिधिद्वयञ्च स चतुःपूर्व्वं चतुर्व्वारकं
मन्त्री तर्पणतत्परोऽभिलषितं संप्राप्नुयान्मण्डलात् ॥ ३१ ॥

अथ गजलिप्सुर्नृपतिर्गजवनमध्ये प्रसाधयेद्वारीम् ।
तन्निकटे सुविशालं चतुरस्रं कारयेच्च गृहवर्य्यम् ॥ ३२ ॥
परिवीतदृढ़ावरणं तच्चतुर्द्वारतोरणोल्लसितम् ।
तस्मिन्मण्डपवर्य्ये चतुरस्रामुन्नतां स्थलीं कृत्वा ॥ ३३ ॥
उत्तरभागे तस्याः कुण्डं रचयेद्यथा पुरा तत्र ।
चापजहरिभवमानुषचक्रप्रोक्तानथाचरान्मन्त्री ॥ ३४ ॥
जङ्घादिमेखलासु क्रमेण विलिखेन्निजेष्टसमवाप्त्यै ।
संप्रोक्तलक्षणयुतं प्रविरचयेन्मण्डलं स्थलीमध्ये ॥ ३५ ॥
आवाह्य विघ्नेश्वरमर्च्चयित्वा प्रागुक्तया तन्त्रविधानक्लृप्त्या (१) ।
निवेद्य चाथो सहभक्ष्यलेह्यैः प्राज्यैश्च साज्यैरपि भोज्यजातैः ॥ ३६ ॥
आधाय वैश्वानरमत्र कुण्डे समर्च्य मन्त्रैः क्रमशः कृशानोः ।
तैरेव पूर्व्वं जुहुयाद्घृतेन मन्त्री समृद्ध्या च ततस्त्रिवारम् ॥ ३७ ॥
तारेण लक्ष्म्याभियुता स्मरक्ष्माविघ्नेशबीजैः क्रमशोऽनुबद्धैः ।
पदत्रयेणापि च मन्त्रराजं विभज्य मन्त्री नवधा जुहोतु ॥ ३८ ॥
पुनः समस्तेन च मन्त्रवर्णसंख्यं प्रजुह्वन्नपि सर्पिषैव ।
पूर्व्वप्रदिष्टैर्जुहुयादथाष्टद्रव्यैः प्रसिक्तैर्मधुरत्रयेण ॥ ३९ ॥
सचतुश्चत्वारिंशत्सहस्रसंख्यैश्चतुःशतैश्चतुर्भिश्च ।
दशकैश्चतुर्भिरपि हुताच्चतुश्चत्वारिंशद्दिनैरतो भवति ॥ ४० ॥
करिकलभाः करिणीभिः संपाद्यन्ते(२)ऽवटेऽत्र गणपतिना ।
प्रतिदिनमभ्यवहार्य्यं च विप्रान् संवर्द्धितस्तदाशीर्भिः ॥ ४१ ॥

(१) "तत्र विधानक्लृप्त्या" इति वा पाठः ।
(२) "संपात्यन्ते" इति वा पाठः ।

तेषां मातङ्गानां दद्यात् पञ्चाशद्दक्षिणां गुरवे ।
तद्विक्रीतं वस्तु वा प्रसादितायाथ तद्दशांशं वा ॥ ४२ ॥
मिथुनानां गणपानां निध्योश्च तथाङ्गमातृलोकेशानाम् ।
मन्त्रैर्घृतेन हुत्वाभ्यर्च्य च होमं समाप्य सम्यग्मन्त्री ॥ ४३ ॥
पुनरुद्धृत्य निवेद्यादिकं समभ्यर्च्य गणपतिं सावरणम् ।
उद्वास्य स्वे हृदये विहरेदित्यर्चनाक्रमो निर्दिष्टः ॥ ४४ ॥
प्रोक्तास्त्वेवं दशभुजमनुः संग्रहेणात्र भक्तो
दीक्षां लब्ध्वा विधिवदभिजप्याथ हुत्वार्चयित्वा ।
नत्वा नुत्वा दिनमनु तथा तर्पयित्वा स्वकामान्
लब्ध्वा चान्ते व्रजति मुनिभिः प्रार्थनीयं पदं तत् ॥ ४५ ॥
स्मृतिपीठः पिणाकी सानुग्रहो विन्दुसंयुतः ।
वीजमेतत् भुवः प्रोक्तं संस्तम्भनकरं परम् ॥ ४६ ॥
चतुरीयो विलोमेन तारादिर्बिन्दुसंयुतः ।
वैघ्नो मन्त्रो हृदन्तोऽर्चाविधौ होमे द्विठान्तकः ॥ ४७ ॥
गणकः स्यादृषिश्छन्दो निवृद्विघ्नोऽस्य देवता ।
वीजेन दीर्घयुक्तेन दक्षिणाङ्गक्रियेरिता ॥ ४८ ॥
रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलि-
र्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो वीजपूरात्तनासः ।
हस्ताग्राक्लृप्तपाशाङ्कुशरदवरदो नागवक्त्रोऽहिभूषो
देवः पद्मासनो वो भवतु सुरनतो भूतये विघ्नराजः ॥ ४९ ॥
दीक्षितः प्रजपेल्लक्षचतुष्कं प्राक्समीरितैः ।
जुहुयादष्टभिर्द्रव्यैर्यथापूर्व्वं दशांशतः ॥ ५० ॥
पीठे तीव्रादिभिः पद्मकर्णिकायां विनायकम् ।
आवाह्य पूजयेद्दिक्षु चतुर्ष्वपि यजेत् पुनः ॥ ५१ ॥
गणाधिपं गणेशञ्च गणनायकमेव च ।
गणक्रीडं कर्णिकायामङ्गैः किञ्जल्कसंस्थितैः ॥ ५२ ॥

वक्रतुण्डैकदंष्ट्री च महोदरगजाननौ ।
लम्बोदराख्यविकटौ विघ्नराड्धूम्रवर्णकौ ॥ ५३ ॥
समर्च्चयेन्मातृवर्गं वाह्ये लोकेश्वरानपि ।
इति प्रोक्ता संग्रहेण गणेशीयसमर्च्चना ॥ ५४ ॥
नारिकेलान्वितैर्मन्त्री शक्तुलाजतिलैर्हुनेत् ।
आरभ्याच्छां प्रतिपदं चतुर्थ्यन्तं चतुःशतम् ॥ ५५ ॥
दिनशः सर्व्ववश्यं स्यात् सर्व्वकामप्रदं नृणाम् ।
तिलतण्डुलकैर्लक्ष्मीवश्यकृच्च यशस्करम् ॥ ५६ ॥
मधुरत्रयसिक्ताभिर्लाजाभिः सप्तवासरम् ।
जुहुयात् कन्यकार्थी वा कन्यका वा वरार्थिनी ॥ ५७ ॥
चतुर्थ्यां नारिकेलैस्तु होमः सद्यः श्रियावहः ।
हविषा घृतसिक्तेन सर्व्वकार्य्यार्थदो हुतः ॥ ५८ ॥
दध्यक्तलोणमुद्राभिर्हुनेन्निशि चतुर्द्दिनम् ।
इष्टार्थसिद्धेर मतिमान् सद्यः संवादसिद्धये ॥ ५९ ॥
ईदृशं गणपं ध्यात्वा मन्त्री तोयैः सुधामयैः ।
दिनादौ दिनशस्तस्य तर्पयेन्मस्तके सुधीः ॥ ६० ॥
चत्वारिंशच्चतुःपूर्व्वं तत्पूर्व्वं वा चतुःशतम् ।
चत्वारिंशद्दिनात्तस्य काङ्क्षिता सिद्धिरेष्यति ॥ ६१ ॥
नवनीतेन वे (१) लिख्यादनुलोमविलोमकम् ।
उदरस्थितसाध्याख्यं तद्बीजं तत्प्रवेष्टितम् ॥ ६२ ॥
समीरणं प्रतिष्ठाप्य जप्त्वाष्टशतसंख्यकम् ।
तूष्णीं प्रभक्षयेदेतत् (२) सप्तरात्राद्वशीकरम् ॥ ६३ ॥
अन्त्यासनोऽथ सूक्ष्मो लोहितगोऽग्निः पुनः स एव स्यात् ।
सादान्तेनायार्णौ नत्यन्तो मनुरयं स्ववीजाद्यः ॥ ६४ ॥

(१) "नवनीते नवे" इति पाठान्तरम् ।

(२) "सप्तवारात्" इति पाठान्तरम् ।

ऋषिर्देवते तु पूर्व्वे छन्दस्तु विराड़मुष्य संप्रोक्तम् ।
वीजेन दीर्घभाजा कथितोऽङ्गविधिः क्रमेण विन्दुमता ॥ ६५ ॥
धृतपाशाङ्कुशकल्पलतिकास्वरदश्च वीजपूरयुतः ।
शशिशकलकलितमौलिस्त्रिलोचनोऽरुणतनुश्च गजवदनः ॥ ६६ ॥
भासुरभूषणदीप्तो वृहदुदरः पद्मविष्टरो ललितः ।
ध्येयोऽनायतदोःपल्लरसिरुहः सम्पदे सदा मनुजैः ॥ ६७ ॥
दीक्षायुक्तः प्रजपेल्लक्षं मनुमेनमथ तिलैरयुतम् ।
त्रिमधुरयुक्तैर्जुहुयात् पूर्व्वोक्तैर्व्वाथवाष्टभिर्द्रव्यैः ॥ ६८ ॥
विघ्नविनायकवीराः सशूरवरदेभवक्त्रैकरदाः ।
लम्बोदरश्च मात्राङ्गावृत्त्योरन्तराथ लोकेशाः ॥ ६९ ॥
पूज्याः सितघृतपायसहवनात्सञ्जायते महालक्ष्मीः ।
केवलघृतहुतमुदितो विघ्नः सद्यो वशीकरोति जगत् ॥ ७० ॥
एकमपि नारिकेलं सचर्म्मलोष्टेन्धनं हुनेन्मन्त्री ।
दिनशश्चत्वारिंशद्दिनतः स तु वाञ्छितार्थमभ्येति ॥ ७१ ॥
सपृथुकशक्तुकलाजातिलैरभीष्टार्थसिद्धये जुहुयात् ।
सापूपनारिकेलेक्षुकदलीभिस्तथा समधुराभिः ॥ ७२ ॥
अष्टभिरेतैर्व्विहितो होमः सर्व्वार्थसाधको भवति ।
दिनशः सघृतान्नहुतो गृहयात्राप्रापको गृहस्थानाम् ॥ ७३ ॥
अन्वहमङ्कामादौ गणपं सन्तर्पयेच्चतुःपूर्व्वम् ।
चत्वारिंशद्वारं सशुद्धजलैरिन्दिराप्तये मन्त्री ॥ ७४ ॥
समहागणपतियुक्तैर्विघ्नाद्यैर्द्दशभिराह्वयैर्द्दिनशः ।
तर्पणपूजाहुतविधिरपि वाञ्छितार्थसिद्धिप्रदायको भवति ॥ ७५ ॥
विम्बादम्बुदवत् समेत्य सवितुः सोपानकै राजते
स्तोयं तोयजविष्टरं धृतलतादन्तं सपाशाङ्कुशम् ।
नासां साध्यतनौ निधाय सुधया तद्रन्ध्रनिर्यातया
सिञ्चन्तं पुनरन्वहं गणपतिं स्मृत्वाऽमृतैस्तर्पयेत् ॥ ७६ ॥

प्राग्भाषितानपि विधीन् विधिवद्विदध्या-
न्मन्त्री विशेषविदथान्वहमादरेण ।
एकत्र वा गणपतौ मनुजाः स्वरुच्या
नामानुरूपमनुमेनममी भजन्तु ॥ ७७ ॥
इति जपहुतपूजातर्पणैर्विघ्नराजं
प्रभजति मनुजो यस्तस्य सिद्धिर्विशाला ।
भवति सधनधान्यैः पुत्रमित्रादियुक्ता
विगतसकलविघ्ना विश्वसम्वादिनी च ॥ ७८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे सप्तदशः पटलः ॥ * ॥

---

# अष्टादशः पटलः ।

अथ मन्मथमन्त्रविधिं विधिना कथयामि सहोमविधिं सजपम् ।
मथनस्य पुरामपि मोहकरं व्यथिताखिलसिद्धसुरादिगणम् ॥ १ ॥
अजकलाप्रथमाऽवनिशान्तिभिर्युतसुधाकरखण्डविकाशिभिः । (१)
निगदितो मनुरेष मनोभुवः सकलधर्म्मसुखार्थयशोवहः ॥ २ ॥
ऋष्यादिकाश्च सम्मोहनगायत्रीमनोभुवः प्रोक्ताः ।
बीजेन दीर्घभाजा विहितान्यङ्गान्यमुष्य जातियुजा ॥ ३ ॥

अरुणमरुणवासोमाल्यदामाङ्गरागं
स्वकरकलितपाशं साङ्कुशास्त्रेषुचापम् ।
मणिमयमुकुटाद्यैर्दीप्तमाकल्पजातै-
ररुणनलिनसंस्थं चिन्तयेदङ्गयोनिम् ॥ ४ ॥

तरणिलक्षममुं मनुमादरात् समभिजप्य हुनेच्च दशांशतः ।
तदनु किंशुकजैः प्रसवैः शुभैस्त्रिमधुरार्द्रतरैर्निजसिद्धये ॥ ५ ॥
मोहनी क्षोभणी त्रासी स्तम्भन्याकर्षणी तथा ।
द्राविण्याह्लादिनी क्लिन्ना क्लेदिनी स्मरशक्तयः ॥ ६ ॥
साशान्तिद्वयवामश्रुतिसर्गेन्द्रयुगकलवलैश्च सरैः ।
शोषणमोहनसन्दीपनतापनमादनान् यजेत् क्रमशः ॥ ७ ॥

अनङ्गरूपा सानङ्गमदनाऽनङ्गमन्मथा ।
अनङ्गकुसुमाऽनङ्गकुसुमातुरसंज्ञका ॥ ८ ॥
अनङ्गशिशिराऽनङ्गमेखलाऽनङ्गदीपिका ।
अङ्गाशापालयोर्मध्ये वाणानङ्गाद्वती यजेत् ॥ ९ ॥

---

(१) "नन्तु सुधाकरखण्डविराजितः" इति पाठान्तरम् ।

आलिख्यात् कर्णिकायामनलपुरपुटे मारवीजं ससाध्यं
तद्रन्ध्रेष्वङ्गषट्कं वहिरपि गुणशो मारगायत्रिवर्णान् ।
मालामन्त्रं दलाग्रेष्वपि गुहमुखशः पार्थिवास्त्रिष्वनङ्गं
कुर्य्याद्यन्त्रं तदेतद्भुवनमपि वशेत् का कथा मानवेषु ॥ १० ॥
प्रोक्त्वाथ कामदेवाय विद्महे तदनु पुष्पवाणाय ।
तथा धीमह्यन्ते तन्नोऽनङ्गः प्रचोदयाच्च गायत्री ॥ ११ ॥
नत्यन्ते कामदेवाय चोक्त्वा सर्व्वजनं वदेत् ।
प्रियायेति तथा सर्व्वजनसंमोहनाय च ॥ १२ ॥
वीप्सयित्वा ज्वलपदं प्रज्वलच्च प्रभाषयेत् ।
पुनः सर्व्वजनस्येति हृदयं मम चेत्यथ ॥ १३ ॥
वशमुक्त्वा कुरुं वीप्स्य कथयेद्वह्निवल्लभाम् ।
प्रोक्तो मदनमन्त्रोऽष्टचत्वारिंशद्भिरक्षरैः ॥ १४ ॥
इति यन्त्रक्लृप्तकलशो वहुशः कतमं नरं न परिमोहयति ।
प्रमदावनीश्वरसभानगरादिकमीश्वरानपि वशीकुरुते ॥ १५ ॥
वच्मे विधानमन्यन्मनोभवस्याथ मोहनं जगतः ।
येनार्च्चितः स देवो वाञ्छितमखिलं करोति मन्त्रविदाम् ॥ १६ ॥
अमृतोद्भवो मकरकेतनः सङ्कल्पजन्माह्वयाच्चतरूपी ।
इक्षुधनुर्धरपुष्पशराख्यावङ्गानि च वह्निजायान्तानि ॥ १७ ॥
अरुणतरवसनमाल्यानुलेपनाभरणमिक्षुशरासनधरम् ।
न्यस्तशरवीजदेहो ध्यायेदात्मानमङ्गजं रुचिरम् ॥ १८ ॥
अङ्गवाणावृतेरूर्द्ध्वं पूज्याः षोड़श शक्तयः ।
युवतिर्विप्रलब्धा च ज्योत्स्ना सुभ्रूर्मदद्रवा ॥ १९ ॥
सुरता वारुणी लोला कान्तिः सौदामिनी तथा ।
कामच्छत्रा चन्द्रलेखा शुकी च मदनाह्वया ॥ २० ॥
योनिर्म्मायावती चेति शक्तयः स्युर्मनोभुवः ।
शोको मोहो विलासश्च विभ्रमो मदनातुरः ॥ २१ ॥

१७

अपत्रपो युवा कामी चूतपुष्पो रतिप्रियः ।
ग्रीष्मस्तपान्त ऊर्जश्च हेमन्तः शिशिरो मदः ॥ २२ ॥
चतुर्थामावृतौ पूज्याः स्युर्मारपरिचारकाः ।
परभृत्सारसौ चैव शुकमेघाह्वयौ तथा ॥ २३ ॥
अपाङ्गभ्रूविलासौ च हावभावौ स्मरप्रियाः ।
माधवी मालती चैव हरिणाक्षी मदोत्कटा ॥ २४ ॥
एताश्चामरहस्ताः स्युः पूज्याः कोणेषु संस्थिताः ।
हृल्लेखया स्वनाम्ना च शक्त्यादीनां समर्चनम् ।
इन्द्राद्यैः सप्तमी पूज्या स्मरार्चाविधिरीदृशः ॥ २५ ॥
मदनविधानमितीत्थं प्रोक्तं योऽनेन पूजयेद्विधिना ।
स तु सकललोकपूज्यो भवेन्मनोज्ञश्च मन्दिरं लक्ष्म्याः ॥ २६ ॥
विलसदहङ्कारतनुर्मनःशिवो विभ्रमास्पदीभूतः ।
बुद्धिशरीरां नारीं नरः सदा चित्तयोनिमधिगच्छेत् ॥ २७ ॥
इति मदनयोगकॢप्त्या यो रमयेन्नित्यशो निजां वनिताम् ।
स तु भुक्तिमुक्तिगामी वनिताजनहृदयमोहनो भवति ॥ २८ ॥
आत्मानं मदनं ध्यायेदाशुशुक्षणिरूपकम् ।
तद्बीजाग्रं शिवं ज्वालालीढं तन्वीतनुं तथा ।
सुधामयीञ्च तद्योनिं नवनीतमयीं स्मरेत् ॥ २९ ॥
संगच्छेच्च शिवज्वालालीढं तद्धृदयादिकम् ।
आलिङ्गेदग्निसंस्पर्शद्रुतं तद्रूपकामृतम् ॥ ३० ॥
रसनाशिखयाकर्षेत् तद्दन्तरसनामृतम् ।
कुसुमास्त्रधिया वाह्यौ (१) स्पृशेत् कररुहैरपि ॥ ३१ ॥
हानिं न कुर्य्याज्जीवस्य मन्त्री विशदमानसः ।
रतावधोऽधो मध्योर्द्ध्वक्रमेणैवं समाहितः ॥ ३२ ॥

---

(१) "वाह्ये" इति पाठान्तरम् ।

निजां प्रियां भजेदेवं सा मारशरविह्वला ।
छायेवानुगता तस्य भवेदपि भवान्तरे ॥ ३३ ॥
साध्याख्याकामवर्णैः प्रतिपुटितलसत्कर्णिकं (१) पत्रराज-
त्तारर्त्विक्पञ्चजाष्टादशसमिदष्टतुगं डान्तगान्ताक्षराढ्यम् ।
आशाशूलाङ्कितं तद्दिपतिरिपुदले सम्यगालिख्य सेरं
मारं जप्त्वास्य यामाशयति वशगता सा भवेत् सद्य एव ॥ ३४ ॥
हंसारूढ़ो मदनस्त्रैलोक्यक्षोभको भवेदाशु ।
ष्युयुतो (२) रञ्जनकृत् स्याज्जीवोपेतस्तथायुषे शस्तः ॥ ३५ ॥
तारयुजा त्वमुनाग्नौ हुत्वा सम्पातितेन चाज्येन ।
सम्भोजयेत् पतिं स्वं वनिता स नितान्तरञ्जितो भवति ॥ ३६ ॥
दध्यक्ताभिर्जुहुयाल्लाजाभिः कन्यकां समाकाङ्क्षन् ।
कन्यापि वरं लभते विधिना नित्यानुरक्तमसुनैव ॥ ३७ ॥
अभिनवैः सुमनोभिरशोकजैर्दधियुतैर्व्विहिता हवनक्रिया ।
परमवश्यकरी परिकाङ्क्षितामभिवहेदचिरादिव कन्यकाम् ॥ ३८ ॥
अभीष्टदायी स्मरणादपि स्मर-
स्तथा जपादर्च्चनया विशेषतः ।
प्रसादतोऽस्याखिललोकवर्त्तिन-
श्चिराय वश्याश्च भवन्ति मन्त्रिणः ॥ ३९ ॥
कन्दामध्यगताः ष्णायगोव्यर्णा यन्नमध्यगाः ।
गोपीजनवकाराः स्युर्भाय स्वाहा स्मरादिकाः ॥ ४० ॥
ऋषिश्च नारदोऽस्य स्याद्गायत्रं छन्द उच्यते ।
मन्त्रस्य देवता कृष्णस्तदङ्गविधिरुच्यते ॥ ४१ ॥
मूलमन्त्रचतुर्व्वर्णचतुष्केण द्विकेन च ।
प्रोक्तान्यङ्गानि भूयोऽमुं चिन्तयेद्देवकीसुतम् ॥ ४२ ॥

---

(१) "बीजकम्" इति वा पाठः ।
(२) "फयुतः" इति पाठान्तरम् ।

अथ्यान्मीलत्कलापद्युतिरहिरिपुपिच्छोल्लसत्केशजालो
गोपीनेत्रोत्पलाराधितललितवपुर्गोपगोवृन्दवीतः ।
श्रीमद्वक्त्रारविन्दप्रतिहसितशशाङ्काकृतिः पीतवासा
देवोऽसौ वेणुवाद्यक्षपितजनधृतिर्देवकीनन्दनो वः ॥ ४३ ॥
अयुतद्वितयावधिर्जपः स्यादरुणैरम्बुरुहैर्हुनेद्दशांशम् ।
मुरजिद्विहिते तु पीठवर्य्ये दिनशो नन्दसुतः समर्च्चनीयः ॥ ४४ ॥
अङ्गाशेड्वज्राद्यैः परिपूज्य च पायसेन सुसितेन ।
हैयङ्गवीनकदलीफलदधिभिः प्रीणयेच्च गोविन्दम् ॥ ४५ ॥
जुहुयाद्दुग्धहविर्भिर्व्विमलैः सर्पिः सितोपलोपेतैः ।
इष्टान्तुष्टो लक्ष्मीं समावहेत् सद्य एव गोविन्दः ॥ ४६ ॥
बालं नीलाम्बुदाभं नवमणिविरणत्किङ्किणीजालबद्ध-
श्रोणीजङ्घान्तयुग्मं विपुलरुरुनखप्रोल्लसत्कण्ठभूषम् ।
फुल्लाम्भोजाभवक्त्रं हतशकटपतत्पूतनाद्यं प्रसन्नं
गोविन्दं शङ्करेन्द्राद्यमरवरनतं (१) पूजयेद्वासरादौ ॥ ४७ ॥
वन्द्यं देवैर्मुकुन्दं विकसितकरविन्दाभ(२)मिन्दीवराक्षं
गोगोपीवृन्दवीतं जितरिपुनिवहं कुन्दमन्दारहासम् ।
नीलग्रीवाग्रपिच्छाकलनसुविलसत्कुन्तलं भानुमन्तं
देवं पीताम्बराढ्यं यजतु च दिनशो मध्यमेऽह्नो रमायै ॥ ४८ ॥
विक्रान्त्या ध्वस्तवैरिव्रजमजितमपास्ताऽवनीभारमाद्यै-
रावीतं नारदाद्यैर्मुनिभिरनुदिनं तत्त्वनिर्णीतिहेतोः ।
सायाह्ने निर्म्मलं तं निरुपममजरं पूजयेन्नीलभासं
मन्त्री विश्वोदयस्थित्यपहरणपरं मुक्तिदं वासुदेवम् ॥ ४९ ॥
त्रिकालमेवं परिचिन्त्य शार्ङ्गिणं प्रपूजयेद्यो मनुजो महामनाः ।
स धर्म्ममर्थं ससुखं श्रियं परामवाप्य देहापदि मुक्तिमाप्नुयात् ॥ ५० ॥

---

(१) "अमरवरमजम्" इति पाठान्तरम् ।
(२) "करवन्दाभम्" इति पाठान्तरम् ।

ग्रामं गच्छन्नगरमपि वा मन्त्रजापी मनुष्यो
देवेशं तन्मुखमनु मुहुस्तर्पयेद्दुग्धबुद्ध्या ।
शुद्धैस्तोयैः स तु बहुरसोपेतमाहारजातं
दद्यान्नित्यं प्रचुरधनधान्यांशुकाद्यैर्मुकुन्दः ॥ ५१ ॥
भिक्षावृत्तिर्द्दिनमनु तमेवं विचिन्त्यात्मरूपं
गोपस्त्रीभ्यो मुहुरपहरन्तं मनोभिः सहैव ।
लीलावृत्त्या ललितललितैश्चेष्टितैर्दुग्धसर्पि-
र्दध्यन्नाद्यं स पुनरमितामेति भिक्षां गृहेभ्यः ॥ ५२ ॥
ध्यानी मन्त्री मन्त्रजापी च नित्यं यद्यद्वाञ्छन् यत्र यत्र प्रयाति ।
तत्तल्लब्ध्वा तत्र तत्र प्रकामं प्रीतः क्रीडेद्देववन्मानुषेषु ॥ ५३ ॥
एवं देवं पूजयन्मन्त्रमेनं जप्यान्मन्त्री सर्व्वलोकप्रियः स्यात् ।
इष्टान् कामान् प्राप्य सम्पन्नवृत्तिर्नित्यं शुद्धं तत्परं धाम भूयात् ॥ ५४ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे अष्टादशः पटलः ॥ * ॥

---

# एकोनविंशः पटलः ।



अथ प्रणवसंज्ञकं प्रतिवदामि मन्त्रं परं
सजापमपि सार्च्चनं सहुतकॢप्तिसोपासनम् ।
अशेषदुरितापहं विविधकामकल्पद्रुमं
विमुक्तिफलसिद्धिदं विमलयोगिसंसेवितम् ॥ १ ॥
आद्यः स्वरः समेतोऽमरेण सधसप्तमार्णविन्दुयुतः ।
प्रोक्तः स्यात्प्रणवमनुस्त्रिमात्रकः सर्व्वमन्त्रसमवायी ॥ २ ॥
मन्त्रस्यास्य मुनिः प्रजापतिरथ छन्दश्च दैव्यादिका
गायत्री गदिता जगत्सु परमात्माख्यस्तथा देवता ।
अक्षीवैर्युगमध्यगध्रुवयुतैरङ्गानि कुर्य्यात् स्वरै-
र्मन्त्री जातियुतैश्च सत्यरहितैर्व्वा (१) व्याहृतीभिः क्रमात् ॥ ३ ॥
विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोदराङ्घ्रि-
श्रोणीभूषं सवक्षोमणिमकरमहाकुण्डलामण्डितांसम् (२) ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयमाशा-
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥ ४ ॥
दीक्षितो मनुमिमं शतलक्षं प्रजपेत्प्रतिहुनेच्च दशांशम् ।
पायसैर्घृतयुतैश्च तदन्ते विप्रभूरुहभवाः समिधो वा ॥ ५ ॥
सर्पिः पायसशालीतिलसमिदाज्यैरनेन (३) यो जुहुयात् ।
ऐहिकपारत्रिकमपि स तु लभते वाञ्छितं फलं न चिरात् ॥ ६ ॥

---

(१) "सत्यरहितैर्व्वा" इति पाठान्तरम् ।
(२) "मण्डिताङ्गम्" इति वा पाठः ।
(३) "अनेन" इत्यत्र "अनले" इति पाठान्तम् ।

अभ्यर्च्य वैष्णवमथो विधिनैव पीठ-
मावाह्य तत्र सकलार्थकरं मुकुन्दम् ।
अङ्गैः समूर्त्तियुगशक्तियुगैः सुरेन्द्र-
वज्रादिकैर्यजतु मन्त्रितमः क्रमेण ॥ ७ ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
स्फटिकस्वर्णदूर्व्वेन्द्रनीलाकाराश्च वर्णतः ॥ ८ ॥
चतुर्भुजाश्चक्रशङ्खगदापङ्कजधारिणः ।
किरीटकेयूरिणश्च पीताम्बरधरा अपि ॥ ९ ॥
सशान्ती श्रीसरस्वत्यौ रतिश्चास्मिदलाश्रिताः ।
अच्छपद्मरजोदुग्धदूर्व्वावर्णाः स्वलङ्कृताः ॥ १० ॥
आत्मान्तरात्मपरमज्ञानात्मानस्तु मूर्त्तयः ।
निवृत्तिश्च प्रतिष्ठाह्वा विद्या शान्तिश्च शक्तयः ॥ ११ ॥
ज्वलज्ज्वालारुचः प्रोक्ता आत्माद्या मूर्त्तिशक्तयः ।
इति पञ्चावरणकं विधानं प्रणवोद्भवम् ॥ १२ ॥

इत्थं मन्त्री तारमनुं जापहुतार्च्चाभिदैरङ्गीकृत्य च युञ्ज्यादपि योगान् ।
यैः संलब्ध्वा चेह समग्रां श्रियमन्ते शुद्धं विष्णोर्धाम परं प्राप्स्यति योगी ॥ १३ ॥

करपादमुखादिविहीनमनारतदृश्यमनन्यगमात्मपदम् ।
यमिहात्मनि पश्यति तत्त्वविदस्तमिमं किल योगमिति ब्रुवते ॥ १४ ॥
योगाग्निदूषणपरन्त्वथ कामकोपलोभप्रमोहमदमत्सरतेति षट्कम् ।
वैरं जयेत्सपदि योगविदेनमङ्गैर्योगस्य धीरमतिरष्टभिरिष्टदैश्च ॥ १५ ॥

यमनियमासनपवनायामाः प्रत्याहृतिश्च धारणया ।
ध्यानञ्चापि समाधिः प्रोक्तान्यङ्गानि योगयोग्यानि ॥ १६ ॥
सत्यमहिंसा समता धृतिरस्तेयं चमार्जवञ्च तथा ।
वैराग्यमिति यमः स्यात् स्वाध्यायतपोऽर्च्चनाव्रतानि तथा ॥ १७ ॥
सन्तोषश्च सशौचो नियमः स्यादासनञ्च पञ्चविधम् ।
पद्मस्वस्तिकभद्रकवज्रकवीराह्वयाः क्रमात्तदपि ॥ १८ ॥

रेचकपूरककुम्भकभेदात्त्रिविधः प्रभञ्जनायामः ।
मुञ्चेद्दक्षिणयाऽनिलमथानयेद्वामया च मध्यगया ॥ १९ ॥
संस्थापयेच्च नाड्येत्येवं प्रोक्तानि रेचकादीनि ।
षोड़शतद्द्विगुणचतुःषष्टिमात्रकाणि तानि च क्रमशः ॥ २० ॥
चित्तात्मैक्यधृतस्य प्राणस्य स्यात् संहृतिः स्थानात् ।
प्रत्याहारो ज्ञेयश्चैतन्ययुतस्य सम्यगनिलस्य ॥ २१ ॥
स्थानस्थापनकर्म्म प्रोक्ता स्याद्धारणेति तत्त्वज्ञैः ।
यो मनसि देवताया भावः स्यादस्य मन्त्रिणः सम्यक् ॥ २२ ॥
संस्थापयेच्च तत्रेत्येवं ध्यानं विदन्ति तत्त्वविदः ।
सत्तामात्रं शुद्धं नित्यमपि निरञ्जनञ्च यत्प्रोक्तम् ॥ २३ ॥
तत्प्रविचिन्त्य च तस्मिंश्चित्तलयः स्यात् समाधिरुद्दिष्टः ।
अष्टाङ्गैरिति कथितैः पुनराशु निगृह्यतेऽरिरात्मविदा ॥ २४ ॥
अथवा शोषणदाहनप्लावनभेदेन शोधिते देहे ।
पञ्चाशद्भिर्मात्राभेदैर्व्विधिवत् समापयेत्प्राणान् ॥ २५ ॥
पञ्चाशदात्मकोऽपि च कलाप्रभेदेन तार उद्दिष्टः ।
तावन्मात्रायमनात्कलाश्च विधृता भवन्ति तत्त्वविदा ॥ २६ ॥
पूर्व्वमिड़ाया वदने विचिन्तयेद्धूम्रमानिलं बीजम् ।
तेनागतेन देहं प्रशोषयेत् सान्तराधिकरचरणम् ॥ २७ ॥
पिङ्गलया प्रतिमुञ्चेत्तथैव कार्शानवेन रक्तरुचा ।
प्रतिदह्य पूर्व्वविधिना मुञ्चेन्नैशाकरेण सुसितेन ।
संपूरयेत् सुधामयजलशीकरवर्षिणा तनुं सकलाम् ॥ २८ ॥

सुजीर्णमितभोजनः सुखसमाप्तनिद्रादिकः
सुशुद्धतलसद्गृहे विरहिते च शीतादिभिः ।
पटाजिनकुशोत्तरे सुविशदे च मृद्वासने
निमीलितविलोचनः प्रतिविशेत् सुखं प्राङ्मुखः ॥ २९ ॥

प्रसारितं वामकरं निजाङ्के निधाय तस्योपरि दक्षिणञ्च।
ऋजुः प्रसन्नोऽवहितेन्द्रियः सन्नाधारमत्यन्तसमं स्मरेत् स्वम् ॥ ३० ॥
तन्मध्यगतं प्रणवं प्रणवस्थं विन्दुमपि च विन्दुगतम्।
नादं विचिन्त्य तारं यथावदुच्चार्य्य तन्नयेत् सुषुम्नान्तम् ॥ ३१ ॥
तन्मध्यगतं शुद्धं शब्दब्रह्मातिसूक्ष्मतन्तुनिभम्।
तेजः स्मरेच्च तारात्मकमपि मूलं चराचरस्य सदा ॥ ३२ ॥
ॐकारो गुणवीजं प्रणवस्तारो ध्रुवश्च वेदादिः।
आदिरुमध्यो मपरो नामान्यस्य त्रिमात्रकश्च तथा ॥ ३३ ॥
अस्य तु वेदादित्वात् सर्व्वमनूनां प्रयुज्यतेऽथादौ।
योनिश्च सर्व्वदेहे भवति च स च ब्रह्म सर्व्वसम्वादः ॥ ३४ ॥
ऋक् च तदाद्यादिः स्यात्तन्मध्यान्तं यजुश्च।
मान्तादिः सामापि तस्य भेदा वहवः प्रोक्ता हि वेदलोकेषु ॥ ३५ ॥
उच्चार्य्योच्चार्य्य च तं क्रमान्नयेदुपरि षड्दयान्तान्तम्।
मनसा स्मृति यदाऽस्मिन्मनो लयं याति तावदभ्यस्येत् ॥ ३६ ॥
अथवा विन्दुं वर्त्तुलमावर्त्तैस्त्रिभिरुपेतमेवमिव।
प्रोतं रविविम्बेन च समभ्यसेत् स्रुतसुधामयं तेजः ॥ ३७ ॥
अपमृत्युरोगपाप्मजिदचिरेण नृणां सिद्धिदो योगः।
अथवा मूलाधारोत्थिता प्रभा विसविभेदतन्तुनिभा ॥ ३८ ॥
वदनामृतकरविम्बस्रुता ध्याताऽमृताम्बुलवलुलिता।
स्थावरजङ्गमविषहृद्योगोऽयं नात्रसन्देहः ॥ ३९ ॥
अथवा त्रिवलयविन्दुगधाम प्रणवेन समुन्नयेदूर्द्धम्।
पीतोर्णातन्तुनिभं सौषुम्नेनैव वर्त्मना योगी ॥ ४० ॥
तस्मिन्निधाय चित्तं विलयं गमयेद्दिनेशसंख्याते।
पुनरावृत्तिविहीनं निर्व्वाणपदं व्रजेत् समभ्यासात् ॥ ४१ ॥
अथवादिवीजमौ पुनरुमपि विषे तमपि संहरेद्विन्दौ।
विन्दुं नादे तमपि शक्तौ शक्तिं तथैव शान्ताख्ये ॥ ४२ ॥

तेजस्यनन्यगे चिति निर्द्वन्द्वे निष्कले सदानन्दे ।
सूक्ष्मे च सर्व्वतो मुखकरपदनयनादिलक्षणे लक्ष्ये ॥ ४३ ॥
स्वामिनि संहृत्यैवं करणेन्द्रियवर्गनिर्गमापेतः ।
विलीनपुण्यपापो निरुच्छ्वसन् ब्रह्मभूत एव स्यात् ॥ ४४ ॥
अथवा योगोपेताः पञ्चावस्थाः क्रमेण विज्ञाय ।
ताभिर्युञ्जीत सदा योगी सद्यः प्रसिद्धये मुक्त्यै ॥ ४५ ॥
जाग्रत् स्वप्नसुषुप्ती तुरीयतदतीतके च तास्तासु ।
स्वैरिन्द्रियैर्यदात्मा भुङ्क्ते भोगान् स जागरो भवति ॥ ४६ ॥
संज्ञारहितैरपि तैरस्यानुभवो भवेत् पुनः स्वप्नः ।
आत्मनिरुद्ध्युक्ततया नैराकुल्यं भवेत् सुषुप्तिरपि ॥ ४७ ॥
पश्यति परं यदात्मा निस्तमसा चेतसा तुरीयं तत् ।
आत्मपरमात्मपदयोरभेदतो व्याप्नुयाद्यदा योगी ॥ ४८ ॥
तत्तु तुरीयातीतं तस्यापि भवेन्न दूरतो मुक्तिः ।
अथवा सूक्ष्माख्यायां पश्यन्त्यां मध्यमाख्यवैखर्य्योः ॥ ४९ ॥
स सुषुम्नाग्रगयोरपि युञ्ज्याज्जाग्रदादिभिः पवनम् ।
बीजोच्चारो जाग्रद्बिन्दुः स्वप्नः सुषुप्तिरपि नादः ॥ ५० ॥
शक्त्यात्मकं तुरीयं शान्ते लय आत्मनस्तुरीयान्तम् ।
अङ्गुष्ठगुल्फजानुद्वितयं च गुदश्च सीवनी मेढ्रम् ॥ ५१ ॥
नाभिर्हृदयं ग्रीवा सलम्बिकाग्रं तथैव नासा च ।
भ्रूमध्यललाटाग्रं सुषुम्नाग्रं द्वादशान्तमित्येवम् ॥ ५२ ॥
उत्क्रान्तौ, परकायप्रवेशने चागतौ च पुनः स्वतनौ ।
स्थानानि धारणायाः प्रोक्तानि मरुत्प्रयोगविधिनिपुणैः ॥ ५३ ॥
स्थानेष्वेष्वात्ममनःसंयोगसमीकरकर्म्मणोऽभ्यासात् ।
अचिरेणोत्क्रान्त्याद्या भवन्ति संसिद्धयः प्रसिद्धतराः ॥ ५४ ॥
कण्ठे भ्रूमध्ये हृदि नाभौ सर्व्वाङ्गके स्मरेत् क्रमशः ।
लवरसमीरहवर्णैरनिलमथाकाशवच्चनियं स्यात् ॥ ५५ ॥

अवनिजलानलमारुतविहायसां शक्तिभिश्च तद्बीजैः (१) ।
सारूप्यमात्मनश्च प्रतिनीत्वा तत्तदाशु जयति सुधीः ॥ ५६ ॥
एवंप्रोक्तैर्योगैरायोजयतोऽन्वहं तथात्मानम् ।
अचिरेण भवति सिद्धिः समस्तसंसारमोचनी नित्या ॥ ५७ ॥
इति योगमार्गभेदैः प्रतिदिनमारूढयोगयुक्तधिया ।
सिद्धय उपलभ्यन्ते मुक्तिपुरीसंप्रवेशनद्वारः ॥ ५८ ॥
कम्पः पुलकानन्दौ वैमल्यस्थैर्यलाघवानि तथा ।
सकलप्रकाशवित्ते इत्यष्टावस्थाः प्रसूचिकाः सिद्धेः ॥ ५९ ॥
त्रैकाल्यज्ञानेहा मनोज्ञता छन्दतो मरुद्रोधः ।
नाड़ीसंक्रमणविधिर्व्वाक्सिद्धिरीहितश्च देहाप्तिः ।
ज्योतिःप्रकाशने चेत्यष्टौ स्युः प्रत्यया युजः सिद्धेः ॥ ६० ॥
अणिमा महिमा च तथा गरिमा लघिमेशिता वशित्वञ्च ।
प्राप्तिः प्राकाम्यञ्चेत्यष्टैश्वर्य्याणि योगयुक्तस्य ॥ ६१ ॥
अष्टैश्वर्य्यसमेतो जीवन्मुक्तः प्रवच्यते योगी ।
योगानुभवमहामृतरसपानानन्दनिर्भरः सततम् ॥ ६२ ॥

इत्येवं प्रणवविधिः समीरितोऽयं
भक्त्या तं प्रभजति यो जपादिभेदैः ।
स प्राप्नोत्यनुततनित्यशुद्धबुद्धं
तद्विष्णोः परमतरं पदं नराग्र्यः ॥ ६३ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकोनविंशः पटलः ॥ * ॥

---

(१) "तद्बिम्बैः" इति पाठान्तरम् ।

## विंशः पटलः।

अथ पुनरभिवक्ष्ये मन्त्रमष्टाक्षराख्यं
सकलदुरितदुःखध्वान्तसम्भेदभानुम्।
प्रणवहृदयनारावर्णतोऽन्ते यणार्णौ
मपर इति समुद्दिष्टोऽयमिष्टार्थदायी॥ १॥

तारः प्रत्युत्पत्तया निर्दिष्टः सोऽहमर्थकः पूर्व्वम्।
नार्णः प्रतिषेधार्थो मोकारश्चायमर्थको भवति॥ २॥

सलिलानलपवनधराः क्रमेण नारायणाक्षराः प्रोक्ताः।
चरमो यस्तु विभक्तिव्यक्त्यर्थं दर्शितस्तदर्थार्थे॥ ३॥

ऋषिरस्य मनोः साध्यनारायण इतीरितः।
छन्दश्च देवी गायत्री परमात्मा च देवता॥ ४॥

अथ क्रुद्धमहावीरद्युसहस्रपदादिकैः।
उक्तैर्जातियुतैः कुर्य्यात् पञ्चाङ्गानि मनोः क्रमात्॥ ५॥

अष्टाक्षरेण व्यस्तेन कुर्य्यादष्टाङ्गकं सुधीः।
सहृच्छिरःशिखावर्म्मनेत्रास्त्रोदरपृष्ठके॥ ६॥

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराजत्-
केयूरं कौस्तुभाभाशवलरुचिरहारं सपीताम्बरञ्च।
नानारत्नांशुभिन्नाभरणशतयुतं श्रीधराश्लिष्टपार्श्वं
वन्दे दोःसक्तचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम्॥ ७॥

संदीक्षितो मनुमिमं प्रतिजप्तुमिच्छन्
कुर्य्यान्निजेन वपुषैव तु योगपीठम्।
अंसोरुयुग्मपदसाननाभिमूल-
पार्श्वद्वयैर्व्विहितगात्रसमुज्ज्वलञ्च॥ ८॥

मध्येऽनन्ताद्यैरपि सज्ज्ञानाद्यान्तिकैर्यजेन्मन्त्री ।
पीठाख्यमन्त्रपश्चिमसमथगन्धाद्यैश्च सम्यगुपचारैः ॥ ९ ॥
प्रणवं हृदयञ्चैव प्रोक्ता भगवति पदं
विष्णवे च समाभाष्य सर्व्वभूतात्मने पदम् ॥ १० ॥
वासुदेवाय सर्व्वात्मसंयोगपदमुच्चरेत् (१) ।
योगपद्मपदे चोक्ता ततः पीठात्मने नमः ॥ ११ ॥

अथ न्यासः ।

अस्त्रमन्त्रप्रवद्धाशो मन्त्रवर्णांस्तनौ न्यसेत् ।
विन्यस्तैर्यैर्भवेन्मन्त्री मन्त्रवर्णात्मको हरिः ॥ १२ ॥
आधारहृद्वदनदोःपदमूलनाभी
कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे ।
कास्येक्षणश्रवणगन्धवहे च दोःपत्-
सन्ध्यङ्गुलीषु हृदि धातुषु सानिलेषु ॥ १३ ॥
मूर्द्धेक्षणास्यहृदयोदरसोरुजङ्घा-
पादद्वयेषु लिपिशो न्यसतु क्रमेण ।
गण्डांसकोरुचरणेषु रथाङ्गशङ्ख-
श्रीमद्गदाम्बुजपदेषु समाहितात्मा ॥ १४ ॥
ततोऽष्टाक्षरपूर्त्यर्थं स्मर्त्तव्यो द्वादशाक्षरः ।
मन्त्रो द्वादश मूर्त्तींस्तु तत्प्रभिन्नास्तनौ न्यसेत् ॥ १५ ॥
अष्टप्रकृत्यात्मकश्च संप्रोक्तोऽष्टाक्षरो मनुः ।
अष्टानां प्रकृतीनाञ्च चतुर्णामात्मनामपि ॥ १६ ॥
द्वादशानान्तु संयोगो मन्त्रः स्याद्द्वादशाक्षरः ।
आदित्या द्वादश प्रोक्ता युक्ता द्वादशमूर्त्तिभिः ॥ १७ ॥

---

(१) "सर्व्वार्थसंयोगपदमुच्चरेत्" इति पाठान्तरम् ।

केशवादिप्रदिष्टानां (१) मूर्त्तीनां द्वादशादितः ।
आदिस्वरयुता न्यस्येत्ताः स्युर्द्वादश मूर्त्तयः ॥ १८ ॥
ललाटोदरहृत्कण्ठदक्षपार्श्वांसके गले ।
तथा वामत्रये पृष्ठककुदोश्च यथाक्रमम् ॥ १९ ॥
द्वादशाक्षरमन्त्रञ्च मन्त्रविन्मूर्द्ध्नि विन्यसेत् ।
मूर्द्धस्थो वासुदेवस्तु व्याप्नोति सकलां तनुम् ॥ २० ॥
पुनस्तत्प्रतिपत्त्यर्थं किरीटादिमनुं जपेत् ।
किरीटकेयूरहारपदान्याभाष्य मन्त्रवित् ॥ २१ ॥
मकरान्ते कुण्डलञ्च शङ्खचक्रगदादिकम् ।
अब्जहस्तपदं चोक्त्वा पीताम्बरधरेति च ॥ २२ ॥
श्रीवत्साङ्कितमाभाष्य वक्षःस्थलमथो वदेत् ।
श्रीभूमिसहितं स्वात्मज्योतिर्द्वयपदं वदेत् ॥ २३ ॥
दीप्तिमुक्त्वा करायेति सहस्रादित्यतेजसे ।
हृदन्तः प्रणवादिः स्यात् किरीटादिमनुस्त्वयम् ॥ २४ ॥
कृत्वा स्थण्डिलमस्मिन्निःक्षिप्य निजासिकां समुपविश्य ।
पीठादिकं निजाङ्गे प्रपूज्य गन्धादिभिः सुशुद्धमनाः ॥ २५ ॥
सद्वादशाक्षरान्तं प्रपूज्य विधिवत् किरीटमन्त्रेण ।
कुर्य्यात् पुष्पाञ्जलिमपि निजदेहे पञ्चशोऽथवा त्रिशः ॥ २६ ॥
इति दीक्षितविहितविधिः संप्रोक्तोऽष्टाक्षरस्य मन्त्रस्य ।
शुद्धानां विमलधियां दीक्षा प्रतिवक्ष्यतेऽत्र संक्षेपात् ॥ २७ ॥
कृत्वा त्रिगुणितादीनामेकं मण्डलमुज्ज्वलम् ।
आत्मार्चनोक्तविधिना शक्तिभिः पीठमर्चयेत् ॥ २८ ॥
विमलोत्कर्षणी ज्ञाना क्रिया योगेति शक्तयः ।
प्रह्वी सत्या तथेशानाऽनुग्रहा नवमी स्मृता ॥ २९ ॥

---

(१) "केशवादिप्रविष्टानाम्" इति पाठान्तरम् ।

निधाय कलशं तत्र पञ्चगव्येन पूरयेत् ।
पयोभिर्वा गवां प्रोक्तैः क्वाथैर्वा साष्टगन्धकैः ॥ ३० ॥
अष्टाक्षराङ्गैरष्टार्णयुगैरष्टाक्षरान्वितैः ।
दलमूले यजेद्भूयो वासुदेवादिकान् क्रमात् ॥ ३१ ॥
सशक्तिकांस्ततो बाह्ये सम्पूज्या हरिहेतयः ।
चक्रशङ्खगदाम्बुजकौस्तुभमुसलाः सखड्गवनमालाः ॥ ३२ ॥
रक्ताच्छपीतकनकश्यामलकृष्णद्युशुक्लभासः स्युः ।
ध्वजश्च वैनतेयश्च शङ्खपद्मौ दिशागताः ॥ ३३ ॥
विघ्नार्य्यकौ तथा दुर्गा (१) विष्वक्सेनो विदिग्गताः ।
ध्वजः श्यामो विपो रक्तो निधी शुक्लारुणप्रभौ ॥ ३४ ॥
अरुणश्यामलश्यामपीता विघ्नादयो मताः ।
इन्द्रादयस्तद्बहिश्च पूज्याः पूर्व्वादिभिः क्रमात् ॥ ३५ ॥
इति विष्णोर्व्विधानन्तु पञ्चावरणमुच्यते ।
एवमभ्यर्च्चिते विष्णावुपचारैस्तु पूर्व्ववत् ॥ ३६ ॥
अग्निमाधाय कुण्डे तु ब्रह्मयागसमीरितैः ।
जुहुयादष्टभिर्द्रव्यैर्मनुनाऽष्टाक्षरेण तु ॥ ३७ ॥
पृथगष्टशतावृत्त्या हुत्वा दत्त्वा बलिन्ततः ।
अभिषिच्य गुरुः शिष्यं प्रवदेत् पूर्व्ववन्मनुम् ॥ ३८ ॥
द्वात्रिंशल्लक्षमानेन स तु मन्त्रं जपेत्ततः ।
तदर्द्धसंख्यकं वापि शुद्धाचारो जितेन्द्रियः ॥ ३९ ॥
पद्मासनः प्राग्वदनोऽप्रलापी तन्मानसस्तर्जनिवर्ज्जिताभिः ।
अक्षस्रजा वाङ्गुलिभिर्जपेत्तं नातिद्रुतं नातिविलम्बितञ्च ॥ ४० ॥
प्रागीरितैरथ जुहोतु दशांशकं वा द्रव्यैः शुभैः सरसिजैर्मधुराप्लुतैर्व्वा ।
रत्नांशुकप्रवरकाञ्चनगोमहीभिर्धान्यैर्यथाविभवतः प्रयजेद्गुरुंश्च ॥ ४१ ॥

---

(१) "सदुर्गेच" इति पाठान्तरम् ।

विप्रान् प्रतर्प्य विभवैरथ मन्त्रजापी
संक्षासयेज्जपविधिञ्च ततः क्रमेण ।
नित्यार्चना च विहिता विधिनाऽमुनैव
प्रोक्तक्रमेण विदधात्वथ चात्मपूजाम् ॥ ४२ ॥

इति जपहुतार्च्चनाद्यैर्मन्त्री योऽष्टाक्षरं समभ्यस्येत् ।
स त्वैहिकीञ्च सिद्धिं संप्राप्यान्ते प्रयाति परमपदम् ॥ ४३ ॥

अङ्गानि पूर्व्वन्त्वथ मूर्त्तिशक्तीः सकेशवादींश्च पुरन्दरादीन् ।
समर्च्चयेद्यस्तु विधानमेतन्नरोऽचिरात् काङ्क्षितमेति कामम् ॥ ४४ ॥

यष्टव्याः स्युर्व्वासुदेवादिरादौ
चक्राद्याः केत्वादिकाः केशवाद्याः ।
इन्द्राद्याश्चेत्येवमेव प्रदिष्टं
पुष्ट्यायुःश्रीकीर्त्तिसिद्ध्यै विधानम् ॥ ४५ ॥

सवासुदेवादिकमर्च्चयित्वा भूयो ध्वजादींश्च पुरन्दरादीन् ।
क्रमेण विद्वान् विधिनार्च्चयीतेत्ययं क्रमश्च त्रिदशाभिपूज्यः ॥ ४६ ॥

इत्युक्तविधिचतुष्के पूजयितुरथैकमपि यथाशक्ति ।
अचिरेण भवति लक्ष्मीर्हस्तगता सकलवर्गसिद्धिकरी ॥ ४७ ॥

अष्टाक्षराक्षराष्टकमूर्त्तिविधानानि भेदभिन्नानि ।
वक्ष्याम्यर्च्चयितॄणां वाञ्छितसकलार्थसिद्धिदानि सदा ॥ ४८ ॥

सिन्दूरकुन्दकरवन्दकबन्धुजीव-
काश्मीरपद्ममकरन्दरुचः क्रमेण ।
नीलोत्पलाम्बुरुहरागसमानरूपाः
स्युर्म्मूर्त्तयोऽष्ट कथिता मनुवर्णजाताः ॥ ४९ ॥

अरिदरगदाब्जहस्ताः सर्व्वास्तु नकारमोऽर्णयोर्मूर्त्ती ।
शङ्खारिदरगदाब्जकरे लक्षणमन्यत् समानरूपं स्यात् ॥ ५० ॥

या मूर्त्तिरर्च्यतेऽस्या व्रजन्ति परिवारतां तदवशिष्टाः ।
अविशिष्टेऽन्तेऽप्यंशे स्वयञ्च परिवारतां प्रयाति तदा ॥ ५१ ॥

इयमेवावृतिरधिका ध्रुवजे ध्रुवजात् पुरा समुद्दिष्टात्।
भवति विधानादिति पुनरेषां प्रथमविधानमुद्दिष्टम् ॥ ५२ ॥
अथ द्वितीयाचरजेऽङ्गतोऽन्ते वर्णाष्टमूर्त्तीरपि मूर्त्तिशक्तीः।
यजेद्विधाने च सकेतुलोकपालादिकानन्यदथ प्रवच्ये (१) ॥ ५३ ॥

सोकारजे (२) रतिधृती च सकान्तितुष्टि-
पुष्टिस्मृतीरपि च दीप्त्यभिधाञ्च कीर्त्तिम्।
केत्वादिकञ्च सशतक्रतुपूर्व्वकञ्च
सम्पूजयेद्विमलधीः पुनरङ्गतोऽन्ते ॥ ५४ ॥

नाकारजेऽङ्गतोऽन्ते प्रपूजयेन्मूर्त्तिशक्तिलोकेशान्।
रावर्णजे तु मूर्त्तीः श्रीभूमायामनोन्मथनीश्च यजेत ॥ ५५ ॥
ह्रीः श्रीरतिः सपुष्टिर्मोहनिमाये महदादियोगाद्ये।
तृतीयावृतिरन्यदशेषं पुरैव निर्द्दिष्टम् ॥ ५६ ॥
यकारजेऽरिशङ्खौ च सगदाहलशार्ङ्गकाः।
मुसलः खड्गशूलौ च तृतीया नाचरोद्भवे ॥ ५७ ॥
शेषो वासुकितचककर्कोटकपङ्कजमहापद्माः।
दरपाल(३)कुलिकाख्यौ (४) तृतीयमन्यत् समं विधानेऽन्त्ये ॥ ५८ ॥
अङ्गैः प्रथमावरणं भूर्त्तिभिरपि शक्तिभिर्द्वितीयमपि।
अन्ये केशवकेत्वादिभ्यां स्यात् पञ्चमञ्च मत्स्याद्यैः ॥ ५९ ॥
मत्स्यः कूर्म्मवराहौ नृसिंहकुब्जत्रिरामकृष्णाश्च।
कल्किः सानन्तात्मा पुनरमृतात्मा च षष्ठमहिपाद्यैः ॥ ६० ॥
सप्तममपि लोकेशैरष्टममपि तदायुधैश्च संप्रोक्तम्।
प्रागुक्तेषु विधानेष्वालच्यं नोक्तमत्र यत्तदपि ॥ ६१ ॥

---

(१) "सकेतुलोकपालादिकानुक्तविधानकृत्या" इति पाठान्तरम्।
(२) "मूर्त्त्यावृतिम्" इति पाठान्तरम्।
(३) "शङ्खपाल" इति पाठान्तरम्।
(४) "गुलिकाख्यौ" इति पाठान्तरम्।

अष्टाक्षराक्षरविधानचतुष्कयुग्मं
प्रोक्तक्रमेण विधिनाभियजेद्य एनम् ।
भक्त्या मुकुन्दमनुजापरतो नराग्र्यः
प्राप्नोति वाञ्छितमयत्नत एव कामम् ॥ ६२ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे विंशः पटलः ॥ * ॥

---

## एकविंशः पटलः ।

अथ प्रवक्ष्यामि च मासभेदभिन्नानि यन्त्राण्यपि संग्रहेण ।
रेखाक्रमद्युन्ति विचित्रवर्णलसन्ति विष्णोश्च विधानभाञ्जि ॥ १ ॥
यैः कुर्य्युरिष्टाप्तिनिविष्टचेष्टा धरण्यनन्तादिकसंज्ञकानि ।
व्रतान्यभीष्टार्थदकल्पवृक्षैरनारतेनैव च साधकेशाः ॥ २ ॥
मेषादिकं यच्च चतुष्कमादौ मासेषु तद्वायुग्रहावृतं स्यात् ।
सिंहादिकं भूग्रहसंवृतञ्च चापादिकं पार्थिवयुग्मवीतम् ॥ ३ ॥
मेषादिकेषु त्रिगुणात्मकानि चराणि भास्वद्गुणितात्मकानि ।
स्थिराण्यथो षड्गुणितानि तज्ज्ञैरुक्तानि यन्त्राण्युभयात्मकानि ॥ ४ ॥
तानि त्रिषड्द्वादशकात्मकोक्तैः स्युर्लक्षणैरप्युपलक्षितानि ।
स्वैः स्वैश्च नामप्रविभक्तरूपभेदैर्व्वहिर्व्वेष्टितविम्बकानि ॥ ५ ॥
त्रिगुणितमपि यन्त्रमष्टपत्रावृतमथ षड्गुणितं द्विषड्दलाख्यम् ।
स्थिरगतमपि चाष्टयुग्मपत्रं तदपि षड्युगपत्रशोभितं वा ॥ ६ ॥
पद्मं चरोभस्थिरसंज्ञकेषु रक्तप्रपीताच्छदलादिवर्णम् ।
मासेषु यन्त्रोदरक्लृप्ततत्तन्मासाभिधामूर्त्त्यभिधाचराढ्यम् ॥ ७ ॥
केशवमेषादीनां ये दीर्घा मूर्त्तिराशिवर्णानाम् ।
ते वृत्तानि भवन्ति च निगदितमिति यन्त्रक्लृप्तिसामान्यम् ॥ ८ ॥
सुवर्णगोक्षीरजवाशिलाभपीतेन्द्रनीलारुणकैरवाभाः ।
काश्मीरमेचाञ्जनरोचिषश्च क्रमेण वर्णैरपि केशवाद्याः ॥ ९ ॥
इतीरिताश्चापि किरीटहारकेयूरपीताम्बरकादितुल्याः ।
सचक्रशङ्खाः सगदाम्बुजाश्च सम्पूजनीयास्तपनैः क्रमेण ॥ १० ॥

धातर्य्यममित्राख्यावरुणांशुभगा विवस्वदिन्द्रयुताः ।
पूषाह्वयपर्ज्जन्यौ त्वष्टा विष्णुश्च भानवः प्रोक्ताः ॥ ११ ॥
प्रथमं केशवधात्टकमितरन्नारायणार्य्यमाख्यञ्च ।
अन्यन्माधवमैत्रं परमपि गोविन्दवारुणं प्रोक्तम् ॥ १२ ॥
पञ्चममपि विष्ण्वंशुं (१) मधुसूदनभगञ्च षष्ठमपि ।
त्रिविक्रमविवस्वदाख्यं सप्तममन्यच्च वामनेन्द्रमपि ॥ १३ ॥
श्रीधरपौष्णं नवमं दशमञ्च हृषीकेशपार्ज्जन्यम् ।
अम्बुजनाभं त्वाष्ट्रं दामोदरवैष्णवं विधानानि ॥ १४ ॥
आदौ विधानेषु समेतमूर्त्तीः शक्तीश्चतस्रोऽभियजेद्यथावत् ।
राशिष्वथो भानुयुताश्च मूर्त्तीः प्रवक्ष्यमाणश्च निरूप्य मन्त्री ॥ १५ ॥
वृषहरिवृश्चिककलशात्मकेष्वथो केतुकेशवाद्येश्च ।
मत्स्यादिकशेषाद्यैः समभियजेदन्तरा समावरणम् ॥ १६ ॥
प्राणप्रोद्यत् स्वराष्टहितयवृतमहावीजकं शक्तिलक्ष्मी-
कामैरास्ताग्निकोणं वहिरपि वृतसिंहान्वितक्रोड़मन्त्रम् ।
विन्दूनामन्तरालेष्वपि च विलिखितैः कादिवर्गैश्च युक्तं
षड्भिर्व्वायव्यगेहावृतमभिमतकामप्रदं मेषयन्त्रम् ॥ १७ ॥
गौरीन्दिरा रतिधृती वसुधा तुष्टिपुष्टिचमासरस्वत्यः ।
मूर्त्त्यश्च मध्यमावृतिराशेशात् प्राग्ध्वजादिभिरपि कथिता ॥ १८ ॥
हयगजरथभृत्यादीनरिपरिभवशौर्य्यादिसिद्धिञ्च ।
तेजो यशश्च विपुलं पूजयितुर्व्वितनुते विधानमिदम् ॥ १९ ॥
वर्णैराद्यैरमन्तैः समभिवृतमहावीजमजमध्यराजत्-
पान्तक्षाद्यक्षराढ्यं गुहनयनहुताशास्त्रिराजन्मथार्णम् ।
अस्त्रैर्गण्डद्वयोद्यत्पचलिपिपरिवीतञ्च लाद्यैः सकान्तैः (२)
काद्यैर्लान्तैश्च यन्त्रं वहुविधफलदं पूजितं स्याद्वृषोत्थम् ॥ २० ॥

---

(१) "विष्णुंशम्" इति पाठान्तरम् । (२) "नाद्यैश्च कान्तैः काद्यैर्णान्तैश्च" इति वा पाठः ।

निल्याऽनन्ता व्यापिनी व्योमरूपा
शान्तिर्व्विद्यारूपिणी च प्रतिष्ठा ।
कल्यामोघा चण्डिका दीर्घजिह्वे-
त्येवं प्रोक्ता ह्यावृतिः स्यात्तृतीया ॥ २१ ॥
सुरभिहयमहिषदासीदासाभरणांशुकादिसिद्धिकरम् ।
वृषजं विधानमेतद्देहान्ते सिद्धिकृत् परस्य सतः ॥ २२ ॥
प्रागच्छन्मात्रभिख्यालिपिभिरभिवृतं यत् स्वरायुक्तवृत्तं
शाद्यैः चान्तैस्तदाद्यैरपि परिवृतगण्डन्तदस्यात्तजं सम् ।
काद्यैर्भान्तैः प्रवीतं मयरलवहयुग्बिन्दुकं वायुगेहा-
वीतं वाञ्छाप्रदानप्रसवगुणयुतं युग्मजं यन्त्रमेतत् ॥ २३ ॥
इन्द्राणी कौमारिका ब्रह्मजाता
वाराह्याख्या वैष्णवी चाथ लक्ष्मीः ।
चामुण्डा माहेश्वरी स्यात्तृतीया
रक्षा प्रज्ञा श्रीप्रदं स्याद्विधानम् ॥ २४ ॥
पाशाद्यष्टाक्षरार्णप्रतिपुटितमहाष्टाक्षरार्णावृतान्त-
र्बीजं शाखान्तरूढं गगनवृहरिबीजात्तकोणं वहिश्च ।
कामिन्यष्टाक्षराद्यन्तगहरिहरबीजावृतं प्रत्यनूद्य-
द्वर्णाढ्यं वायुगेहे स्थितमिति गदितं कर्कटोत्थञ्च यन्त्रम् ॥ २५ ॥
रक्ता रमा कराली कमला चण्डेन्दिरा महोच्छुष्मा ।
श्रीरिति मूर्त्तियुगलयोर्मध्यगता चावृतिरियञ्चापि ॥ २६ ॥
भूतिर्व्विभूतिरुन्नतिर्नतिर्धृतिरतिसंयतिद्युतयः ।
आवृतिरेषा प्रोक्ता श्रीवश्यकरं विधानमिति गदितम् ॥ २७ ॥
उष्मार्णाष्टाक्षरावेष्टितहृदयमथो द्वादशार्णात्तकोणं
सान्तःस्थात्माष्टवर्णैः क्रमगतविगतैरुल्लसत्तत्त्वगण्डम् ।
सिंहानुष्टुप्द्वयार्णान्तरितवृतकलालङ्कृतं चाथ वह्नि-
प्राणेशानक्षपाटाश्रिगकचटतपलक्ष्मलं सिंहयन्त्रम् ॥ २८ ॥

पुष्टिस्तुष्टिर्धृतिरपि कृतिः शान्तिकान्ती प्रमोदा
मेधा हर्षा स्मृतिरभिमता चान्तिका स्यात्तृतीया ।
कृष्णः सत्यो नृहरिवरदौ विश्वमूर्त्तिर्व्वरेण्यः
शौरिः शूरो नरसुरजितौ विष्णुजिष्णू चतुर्थी ॥ २९ ॥

विपक्षनिग्रहं तेजो यशश्च धनसङ्गमम् ।
करोत्यर्च्चयितॄणाञ्च विधानमिति सिंहजम् ॥ ३० ॥

सर्गाद्यान्ताद्यसन्तैरभिवृतहृदयं दण्डिभिश्चाथ ह्राह्री-
ह्रूह्रैह्रौह्रोभिरात्ताश्रिकमथ तु शिखाद्योतिवर्गान्त्यवर्णम् ।
वर्णैः प्रत्यन्वितैः प्रावृतमवनिपुरास्रोल्लसत्कामबीजं
क्लिन्ने स्वाहार्णयुक्तं महिततरफलं कन्यकोत्थञ्च यन्त्रम् ॥ ३१ ॥

अत्रार्च्यो मधुसूदनस्त्वथ हृषीकेशाह्वयो मोहिनी
वैकुण्ठो विरजा हरिः सरसिजा शार्ङ्गी तमोहारिणी ।
व्रध्नाख्यः कमलावती च समुकुन्दाख्यो रमेति क्रमा-
न्मत्स्याद्यैश्च सुताश्वगोमहिषसौभाग्यप्रदं पावनम् ॥ ३२ ॥

आद्यैरावीतबीजं ग्रहवलययुतं हुंफड़ा युक्तकोणं
वाह्ये पाशाङ्कुशार्णावृतमथ युगषण्मूर्त्तिनामार्णमर्णैः ।
प्रत्यन्वेष्वङ्गिरुद्यद्धरियुतहरवर्णैश्च वीतं धरायाः
कोणेषूद्यन्नृसिंहाक्षरमिति कथितं स्यात्तुलायन्त्रमेतत् ॥ ३३ ॥

प्राक्प्रोक्तैश्चक्राद्यैरुक्तास्य समावृतिस्तृतीया स्यात् ।
पोतोपलब्धिमेतत्करोति वाणिज्यलाभञ्च ॥ ३४ ॥

अक्लीवद्वादशाज्द्वादशलिपिवृतहृल्लेखमस्त्रिद्विषट्क-
प्रोल्लास्यष्टाक्षरोष्मार्णकमपि लिपिभिः क्रादिभिश्चाभिवीतम् ।
तद्वाह्ये चन्द्रविम्बप्रपुटितवसुधामण्डलास्त्रिप्रराजत्-
क्लीवार्णं वृश्चिकोत्थं प्रवरतरफलप्राप्तिदं यन्त्रमेतत् ॥ ३५ ॥

चिद्रूपा चिन्मया चिन्तामणिः श्रीः चोणिसंज्ञकाः ।
रतिश्च प्रावनी धारा धरणी तारणी तथा ॥ ३६ ॥

द्राविणी मोहिनी चेति तृतीयेयं समावृतिः ।
अन्वयामिं धर्म्मरतिं प्राप्नुयादस्य चार्च्चनात् ॥ ३७ ॥
षट्कोणावद्धवाणासनविवरलसन्नारसिंहं तदन्तः
शक्तेर्व्वाह्ये परानुप्ररचितलघुसन्धीन्दुयुक्(१)पञ्चकाद्यम् ।
अस्विष्वावद्धशिष्टस्वरमुपरिलसच्छूलकं प्राप्तवर्गं
भूमिरष्टास्त्रिकोद्यज्जद्दुजद्दुलवकं चापयन्त्रं तदेतत् ॥ ३८ ॥
हर्षाद्या सुनदारुणा सगगना घोरा रमा द्राविणी
वीरा वीरिणि हारिणी सहरिणी मन्दारिका द्वादश ।
प्रोक्तेयञ्च समावृतिः पुनरिदं संपूजयन् प्राप्नुया-
ल्लक्ष्मीसन्ततिवृद्धिवश्यपटुतां कान्तिञ्च भक्तिं शुभाम् ॥ ३९ ॥
मध्यस्थायाः परीतो विलसदनुपरात्तस्वरप्राक् परार्द्धं
सिंहार्णान्तास्त्रिगण्डस्फुरितहरिहरार्णं (२) शहार्णावृतञ्च ।
तद्वाह्ये षोड़शार्णाचरवृतमुभकुद्योतितं कोणराजत्
सोऽहं हंसाक्षराढ्यं मकरभवमिदं यन्त्रमिष्टार्थदायि ॥ ४० ॥
मेधा हर्षा श्रद्धा कृपा (३) रतिर्व्वाक् सरस्वती प्रीतिः ।
वाणी चेति तृतीयावृतिरुक्ता मकरजे विधानेऽस्मिन् ॥ ४१ ॥
स्वचेत्रवर्त्तिनः स्युर्ग्रहाः क्रमात् केशवादिभिः सहिताः ।
अर्च्चयितॄणामेतद्धनधान्यसमृद्धिदं विधानं स्यात् ॥ ४२ ॥
शक्तिश्रीकामवीजैः पुटितहरिहरब्रह्मभिश्चावृतान्त-
र्वीजं कोणद्विषट्क(४)स्फुरितनृहरिवीजप्रतिद्योतितञ्च ।
आदिक्षान्तैश्च वर्णैर्वृतमवनिगृहद्वन्द्वकोणान्तकाम-
श्रीशक्तिक्ष्मार्णचिन्तामणिमनु तदिदं श्रीकरं कुम्भयन्त्रम् ॥ ४३ ॥

---

(१) "सन्ध्यर्णयुक्" इति पाठान्तरम् ।
(२) "स्फुरितहरिहरार्णम्" इत्यत्र "स्फुरितहरिहरञ्च" इति पाठान्तरम् ।
(३) "कृपा" इत्यत्र "क्रिया" इति पाठान्तरम् ।
(४) "कोणादिषट्क" इति पाठान्तरम् ।

अच्युतकामिनिभानुमनोज्ञा विश्वतनुर्व्विमला हरिभद्रे ।
सूक्ष्मसरस्वतिनन्दनसन्ध्या स्यादिति मध्यगता वृतिरेषा ॥ ४४ ॥
अवनिपशुपुत्रसम्पदमपि पितृसौख्यञ्च हृत्प्रबोधञ्च ।
कुरुते विधानमेतत् प्रयोक्तुरन्ते च निर्वृतिं परमाम् ॥ ४५ ॥
प्रान्विष्यद्व्रस्वदीर्घा समभिहृतमहावीजमस्त्रेषु षट्सु
द्योतत्सौमारलक्ष्मीगिरिदुहितृधरावीजकं प्रोंसमेतम् ।
वीतङ्काद्यैः कषान्तैर्व्वहिरपि च कुकोणाष्टकोल्लासिहंसं
सर्व्वार्थान् साधकेभ्यो वितरति विधिवत् कल्पितं मीनयन्त्रम् ॥ ४६ ॥
हृष्टिर्व्युष्टिस्तुष्टिरिष्टा सपुष्टिः कान्तिर्मेधा मङ्गला वामसंज्ञा ।
दुर्गा प्रज्ञा भारती मध्यसंस्था वाक्सामर्थ्यश्रीकरं स्याद्विधानम् ॥ ४७ ॥
एभिर्व्विधानैर्धरणीव्रतादिदीक्षाविधीन् ये विधिना प्रकुर्य्युः ।
ते पुण्यभाजो नितरां समृद्ध्या सपुत्रदाराः सुखिनो भवन्ति ॥ ४८ ॥
दीर्घायुषो मुख्यतरेन्दिराश्च महाप्रभावास्त्वसमानवीर्य्याः ।
कलेवरान्ते विगताधयस्ते विष्णोरनन्यं पदमाप्नुवन्ति ॥ ४९ ॥
एभिर्व्विधेयाः कलशाश्च तत्तन्मासोक्तयन्त्रेषु नरैर्यथावत् ।
निजेप्सितं प्राप्य मनोरथन्ते भुक्तेश्च मुक्तेरनुभावकाः स्युः ॥ ५० ॥
कर्षोन्मिते च हाटकपट्टे यन्त्रं विलिख्य चतुरस्रे ।
तद्वित्रं शक्तिते वा कलशेषु विनिक्षिपेच्च दीक्षासु ॥ ५१ ॥
अभिषिच्य यन्त्रकलशं (१) गुरवे प्रददातु संयतमतिः सुमतिः ।
दुरितापनोदविधये द्युतये यशसे श्रिये च मतिसंयतये ॥ ५२ ॥
एषां योगविधीनामेकेन तु पूजयंस्तदवसाने ।
तत्तन्मूर्त्तिप्रीत्यै संस्तोतव्योऽनया हरिः स्तुत्या ॥ ५३ ॥
प्रसीद भगवन्मह्यमज्ञानाकुण्ठितात्मने ।
तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम् ॥ ५४ ॥

(१) "यन्त्रकनकम्" इति पाठान्तरम् ।

अज प्रसीद भगवन्नमितद्युतिपञ्जर।
अप्रमेय प्रसीदास्मद्दुःखहन् पुरुषोत्तम ॥ ५५ ॥
स्वसंवेद्यस्वरूपात्मन्नानन्दात्मन्ननामय।
अचिन्त्यसार विश्वात्मन् प्रसीदेश निरञ्जन ॥ ५६ ॥
प्रसीद तुङ्ग तुङ्गानां प्रसीद शिव शोभन।
प्रसीद स्पष्टगम्भीर गम्भीराणां महाद्युते ॥ ५७ ॥
प्रसीदाव्यक्त विस्तीर्ण (१) विस्तीर्णानामणोरणो।
प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तयायिनाम् ॥ ५८ ॥
गुरोर्गरीयः सर्व्वेश प्रसीदानन्त देहिनाम्।
जय माधव मायात्मन् जय शाश्वत शङ्खभृत् ॥ ५९ ॥
जय सुन्दर सौम्यात्मन् जय केशव केशिहन् (२)।
जय शार्ङ्गधर श्रीमन् जय नन्दकनन्दन ॥ ६० ॥
जय चक्रगदापाणे जयाजय्य जनार्द्दन।
जय रत्नोत्कराबद्धकिरीटाक्रान्तमस्तक ॥ ६१ ॥
जय पक्षिपतिच्छायानिरुद्धार्ककराकर।
नमस्ते नरकाराते नमस्ते मधुसूदन ॥ ६२ ॥
नमस्ते नलिनापाङ्ग नमस्ते नयनाञ्जन।
नमः पापहरेशान नमः सर्व्वभयापह ॥ ६३ ॥
नमः संहृतसर्व्वात्मन् (३) नमः सम्भृतकौस्तुभ।
नमस्ते नयनातीत नमोऽतिक्रान्तवाक्पथ ॥ ६४ ॥
नमो विभिन्नज्ञेयांश नमः स्मृतिपथातिग।
नमस्त्रिमूर्त्तिभेदेन सर्गस्थित्यन्तहेतवे ॥ ६५ ॥

---

(१) "प्रसीद व्यक्तविस्तीर्ण" इति वा पाठः।
(२) पुस्तकान्तरेषु श्लोकार्द्धोऽयं न दृश्यते।
(३) "सम्भृतसर्व्वात्मन्" इति पाठान्तरम्।

विष्णवे त्रिदशारातिजिष्णवे परमात्मने ।
चक्रभिन्नारिचक्राय चक्रिणे चक्रबन्धवे ॥ ६६ ॥
विश्वाय विश्ववन्द्याय (१) विश्वभूतात्मने नमः ।
नमोऽस्तु योगिध्येयाय नमोऽस्त्वध्यात्मरूपिणे ॥ ६७ ॥
भुक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ।
मनोवाक्कायचेष्टाः स्युर्ध्यानस्तुतिनमस्क्रियाः ।
देवेश कर्म्म सर्व्वं मे भवेदाराधनं तव ॥ ६८ ॥

इति हवनजपार्च्चाभेदतो विष्णुपूजा-
निरतहृदयकर्म्मा यस्तु मन्त्री चिराय ।
स खलु सकलकामान् प्राप्य हृष्टान्तरात्मा
जननमृतिवियुक्तामुत्तमां मुक्तिमेति ॥ ६९ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकविंशः पटलः ॥ * ॥

---

(१) "विश्वबन्धाय" इति पाठान्तरम् ।

# द्वाविंशः पटलः ।

अथोच्यते द्वादशवर्णसंज्ञो मन्त्रस्तु साङ्गः सजपः सहोमः ।
विधानतो यं प्रतिजप्य भक्ता भुक्तेश्च मुक्तेश्च पदं भवेयुः ॥ १ ॥
तारं सहृदयं मध्ये गवति स्युर्भवार्णयोः ।
सुययोस्तु तथा देवा मन्त्रोऽयं द्वादशाक्षरः ॥ २ ॥
ऋषिः प्रजापतिश्छन्दो गायत्री विष्णुरुच्यते ।
देवता हृद् द्विवेण स्यान्नमसा शिर उच्यते ॥ ३ ॥
चतुर्भिश्च शिखा वर्णैः पञ्चभिः कवचं भवेत् ।
प्रोक्तमस्त्रं समस्तेन पञ्चाङ्गविधिरीदृशः ॥ ४ ॥
सपादजानुयुगललिङ्गनाभ्युदरेषु च ।
हृद्दोर्गलास्यदृङ्मस्तशिखास्वक्षरतो न्यसेत् ॥ ५ ॥ इति संहारः ।
शिखाललाटनेत्रास्यगलदोर्हृदयेष्वपि ।
सकुक्षिनाभिलिङ्गाख्यजानुपादेषु विन्यसेत् ॥ ६ ॥ इति स्थितिः ।
हृत्कुक्षिनाभिषु तथा गुह्यजानुपदेष्वथ ।
करकण्ठास्यदृङ्मस्तशिखामूर्द्धसु (१) विन्यसेत् ॥ ७ ॥ इति सृष्टिः ।
संहृतेर्दोषसंहारः सृष्टेश्च शुभसृष्टयः ।
स्थितेस्तु शान्तिविन्यासस्तस्मात्कार्य्यस्त्रिधा मनुः ॥ ८ ॥
हरिमुज्ज्वलचक्रदराब्जगदाकुलदोःपरिघं सित(२)पद्मगतम् ।
वलयाङ्गदहारकिरीटधरं नवकुन्दरुचं प्रणमामि सदा ॥ ९ ॥
विधिवदथ विहितदीक्षो जपेन्मनुं वर्णलक्षमानममुम् ।
शुद्धैश्च तिलैर्जुहुयाद्द्वादशसहस्रसंख्यकं मन्त्री ॥ १० ॥

---

(१) "शिखासूर्द्धसु" इति पाठान्तरम् ।
(२) "दोः परिलक्षित" इति पाठान्तरम् ।

पीठे हरेरथाङ्गैः सशक्तिभिर्मूर्त्तिभिस्तदनु यजेत् ।
केशवसुरनाथाद्यैरपि देवं भक्तिसंयुतो विद्वान् ॥ ११ ॥
समिधामथ दुग्धद्रुमजानां जुहुयादर्कसहस्रकं सदुग्धम् ।
मनसः परिशुद्धये मनस्वी सघृतेनापि पयोन्धसा सितेन ॥ १२ ॥
द्वादशाक्षरजपं तु सार्च्चनं यो भजेन्नियमतो दिने दिने ।
ऐहिकं समुपलभ्य वाञ्छितं प्रेत्य याति पदमक्षयं हरेः ॥ १३ ॥
अथ प्रवक्ष्यामि सुदर्शनस्य विधिं मनोः संग्रहतो जपादेः ।
यस्मिन्स्थितः सिद्धिमवापुरग्र्यां सिद्धा मुनीन्द्रा अपि सद्य एव ॥ १४ ॥
अन्त्यतुरीयतदादिकभृगुदहनानन्तवह्निवर्म्मास्त्रैः ।
तारादिर्मनुरुक्तः स्यादभिमतसिद्धिदो रथाङ्गाख्यः ॥ १५ ॥
ऋषिरस्याहिर्बुध्न्यश्छन्दोऽनुष्टुब्देवता च विष्णुः ।
चक्रपदैराविसुधीसंज्वालाद्यैः शिरोऽन्वितैरङ्गम् ॥ १६ ॥
ऐन्द्रीं समारभ्य दिशस्त्वधस्तादन्तं समुक्त्वा क्रमशो दशानाम् ।
चक्रेण बध्नामि नमस्तथोक्त्वा चक्राय शीर्षञ्च दिशाम्प्रबन्धः ॥ १७ ॥
त्रैलोक्यं रक्ष रक्षेति हुं फट् स्वाहेति चोदितः ।
तारादिकोऽयं मन्त्रः स्यादग्निप्राकारसंज्ञकः ॥ १८ ॥

तारन्तु मूर्द्ध्न्यथ सितारुणकृष्णवर्णं
मध्ये भ्रुवोश्च समथो वदने हकारम् ।
हृद्गुह्यजानुपदसन्धिषु चावशिष्टान्
वर्णान्न्यसेदिति मनोः पुनरग्निवर्णान् ॥ १९ ॥

अव्याद्भास्करसप्रभाभिरखिलाभाभिर्दिशो भासयन्
भीमाक्षः स्फुरदट्टहासविकसद्दंष्ट्राग्रदीप्ताननः (१) ।
दोर्भिश्चक्रदरौ गदाब्जमुसलप्रासांश्च (२) पाशाङ्कुशौ
बिभ्रत् पिङ्गशिरोरुहोऽथ भवतश्चक्राभिधानो हरिः ॥ २० ॥

---

(१) "दंष्ट्राप्रदीप्तानलः" इति पाठान्तरम् । (२) "त्रासांश्च" इति पाठान्तरम् ।

प्रोक्ता सुदर्शनायेति विद्महेऽन्ते महापदम् ।
ज्वालाय धीमहि प्रोक्ता तन्नश्चक्रः प्रचोदयात् ॥ २१ ॥
सौदर्शनीयं गायत्री जप्तव्या जप्तुमिच्छता ।
सान्निध्यकारिणीं मुद्रां दर्शयेदनया सुधीः ॥ २२ ॥
नमो भगवते प्रोक्ता महासुदर्शनाय च ।
महाचक्राय च तथा महाज्वालाय चेत्यपि (१) ॥ २३ ॥
दीप्तरूपाय चेत्युक्ता सर्व्वतो रक्ष रक्ष माम् ।
महाबलाय स्वाहेति प्रोक्तस्तारादिको मनुः ।
रक्षाकरः प्रसिद्धोऽयं क्रियमाणेषु कर्म्मसु ॥ २४ ॥

षट्कोणान्तःस्थतारं विवरलिखितमन्त्राक्षरं सन्धिराजत्
स्वाङ्गं वाह्ये कलाकेसरमुदरगताष्टाक्षरञ्चाष्टपत्रम् ।
पद्मं वर्णै(२)र्व्विराजत् विकृतिदललसत्षोड़शार्णं त्रिवीतं
व्योमान्त्यार्णं स्वनाम्ना विरचितगुणपाशाङ्कुशं चक्रयन्त्रम् ॥ २५ ॥
प्रणवहृद्भगवद्युतङे महादिकरथाङ्गचतुर्थी हमस्त्रकैः ।
निगदितस्त्विति षोड़शवर्णको मनुवरो मुनिभिर्व्विहितादरः ॥ २६ ॥
क्वाथैः पयोभूरुहचर्म्मसिद्धैर्दुग्धेन गव्यैरपि पञ्चभिर्वा ।
मूत्रैः पयोर्व्वा प्रतिपूर्य्य कुम्भं समर्चयेच्चक्रहरिं क्रमेण ॥ २७ ॥
अङ्गैः प्रथमावृतिरपि च पूज्या चक्रादिभिर्द्वितीया च ।
लक्ष्म्यादिभिस्तृतीया क्रमात्तथेन्द्रादिभिश्चतुर्थी स्यात् ॥ २८ ॥

चक्रशङ्खगदापद्ममुसला धनुरेव च ।
पाशाङ्कुशौ पीतरक्तसितश्यामत्विषस्त्विमाः ॥ २९ ॥
लक्ष्मीः सरस्वती चाथ रतिः प्रीत्याह्वया ततः ।
कीर्त्तिः कान्तिस्तुष्टिपुष्टी क्रमेणैव तु शक्तयः ॥ ३० ॥

---

(१) "मन्त्रयेत्" इति पाठान्तरम् ।
(२) "वर्गैः" इति पाठान्तरम् ।

संपूज्य चैवं विधिना हरिन्तु शिष्यं गुरुः प्रीततमोऽभिषिञ्चेत् ।
भक्त्या स्वशक्त्या विभवैर्द्विजातीन् सन्तर्प्य भूयो गुरुणानुशिष्टः ॥ ३१ ॥
एकाग्रचित्तो रविलक्षसंख्यं जपेन्मनुं नित्यकृताभिपूजः ।
तावत् सहस्रं तिलसर्षपाज(१)बिल्वाज्यदीर्घानि जुहोतु सम्यक् ॥ ३२ ॥
समुद्रतीरेऽप्यथवाद्रिशृङ्गे समुद्रगानां सरिताञ्च तीरे ।
जपेद्विविक्ते निज एव गेहे विष्णोर्गृहे वा पुरुषो मनस्वी ॥ ३३ ॥
यथोक्तसंख्ये विधिवत् प्रजप्ते मन्त्रे यथोक्तैश्च हुते हुताशे ।
द्रव्यैरथ स्वार्थपरार्थहेतोः कुर्य्यात् प्रयोगान् विधिना यथावत् ॥ ३४ ॥

पीताभा कर्णिका स्यादरुणतरमरं श्यामलञ्चान्तरालं
नेमिः श्वेता च वाह्ये विरचितशिखरेखाकुलं पार्थिवान्तम् ।
चक्रद्वन्द्वं लिखित्वा विशदमतिरथो सौम्ययाम्यञ्च मन्त्री
कुम्भं संपूर्य्य सौम्ये प्ररचयतु तथा दक्षिणे होमकर्म्म ॥ ३५ ॥
षड्विंशच्छतसम्मितै(२)रथ घृतापामार्गकेशाक्षतैः
सद्राजीतिलपायसैश्च सकलैर्गव्यैर्घृताक्तैः क्रमात् ।
हुत्वा तद्धुतशिष्टमत्र विधिवत् क्षिप्त्वा प्रतिद्रव्यकं
प्रस्थार्द्धान्नकृतञ्च पिण्डममलं कुम्भोदके मन्त्रवित् ॥ ३६ ॥
संस्थाप्य दिशि दक्षिणस्यां साध्यं कुम्भेन तेन नीराज्य ।
तमथ घटं सद्रव्यं वहिरारादष्टमे क्षिपेद्राशौ ॥ ३७ ॥
अस्त्रादिकमपि (३) सर्व्वं क्षिपेदथ घटस्य दक्षिणे भागे ।
हुतशेषान्नेन च वलिं मन्त्रेणानेन मन्त्रवित् कुर्य्यात् ॥ ३८ ॥
हृदयान्ते विष्णुपदं प्रोक्त्वाथ गणेभ्य उच्चरेत् पूर्व्वम् ।
शान्तिकरेभ्यश्च वलिं गृह्णन्त्विति शान्तये नमोऽन्तः स्यात् ॥ ३९ ॥

(१) "तिलसर्षपाद्य" इति पाठान्तरम् ।
(२) "षटत्रिंशच्छतसम्मितै" इति पाठान्तरम् ।
(३) "अग्न्यादिकमपि" इति वा पाठः ।

ज्वरादिकां रोगपरम्परां वा विस्मृत्यपस्मारभवां रुजं वा।
रक्ष:पिशाचग्रहवैकृतं वा विधिस्त्वयं मङ्क्षु हरेद्विकारम्॥ ४०॥
पालाशैर्वा स्तनजद्रुमजैर्वा पञ्जरे कृते फलकै:।
संपूर्य पञ्चगव्यैस्तत्र तु संस्थाप्य शुद्धमपि गदिनम्॥ ४१॥
पूर्वोद्दिष्टैर्दिक्षु च सजपं जुहुयु: पृथग्द्विजा वशिन:।
द्रव्यै: सदक्षिणान्तानभ्यर्च्य च मुच्यते रुजो जन्तु:॥ ४२॥
विप्रक्षीरद्रुमत्वङ्मलयजपुरकाश्मीरकुष्ठत्रियामा
विल्वापामार्गराजीतिलतुलसियुगक्रान्तिदूर्वाजवार्कैः।
लक्ष्मीदेवीकुशागोमयकमलवचारोचनापञ्चगव्यै:
सिद्धेऽग्नौ कुम्भसिद्धं मनुजपसहितं भस्म सर्वार्थदायि॥ ४३॥

लक्ष्म्यायुष्करमतुलं पिशाचभूता-
पस्मारादिकमचिरेण नाशयेच्च।
क्षुद्रादीनपि विविधांस्तथोपसर्गा-
नेतस्मान्न परतरा समास्ति रक्षा॥ ४४॥

जुहुयात् गुग्गुलुगुलिकासहस्रकं साष्टकं च मन्त्रितम:।
त्रिदिनं चतुर्दिनं वा सर्वोपद्रवनिवारणं भवति॥ ४५॥
खरमञ्जर्या: समिधामयुतं वा मन्त्रवित्तमो जुहुयात्।
ज्वरभूतामयविस्मृत्यपस्मृती: शमयितुं नियतचित्त:॥ ४६॥
आज्याक्तैर्जुहुयाच्छ्रिये सरसिजैर्दूर्वाभिरप्यायुषे
मेधायै द्विजभूरुहैश्च कुमुदै: श्वेतैस्तथा वाससे।
शुद्धाज्यै: पशवेऽप्युदुम्बरभवै: पुत्राय चाश्वत्थजै-
रेकाब्दं विधिवत् सहस्रसमितैरष्टोत्तरं मुक्तये॥ ४७॥
चक्रस्य नाभिसंस्थं (१) स्मृत्वात्मानं जपेन्मनुं मन्त्री।
स्वयमेकोऽपि न युद्धे मर्त्यैर्बहुभि: पराजितो भवति॥ ४८॥

---

(१) "मध्यसंस्थम्" इति पाठान्तरम्।

मन्त्री सुनियतचित्तश्चक्रस्थं भावयेद्धिया ग्रस्तम् ।
आविश्य सकलमुक्ता मुञ्चति दग्धोऽग्निना शुनाभिभुवा ॥ ४६ ॥

दीप्तं करालदहनप्रतिमञ्च चक्रं
यस्य स्मरेच्छिरसि कस्यचिदप्रियस्य ।
सप्ताहतोऽस्य दहनप्रतिमो ज्वरः स्या-
त्तिंशद्दिनैश्च स परेतपुरं प्रयाति ॥ ५० ॥

कलावृतं वाह्निपदाभिवेष्टितं
समच्चरं यच्छिरसि स्मरेत् सदा ।
दशाहतोऽसौ प्रति चार्द्यते रिपु-
र्मृतिं तथा मण्डलतः प्रयाति ॥ ५१ ॥

सान्तं (१) वायसवर्णं शत्रोः शिरसि स्मरेच्च सप्ताहम् ।
उच्चाटयति क्षिप्रं मारयति वा धियोऽस्य नैशित्यात् ॥ ५२ ॥

स्रवत्सुधावर्षिणमिन्दुसप्रभं
समच्चरं यच्छिरसि प्रचिन्तयेत् ।
क्षणात् समाप्यायितसर्व्वविग्रहो
भवेत् स मर्त्त्यः सुचिरञ्च जीवति ॥ ५३ ॥

मध्ये तारं तदनु च मनुं वर्णशः कोणषट्के
बाह्ये चाङ्गं लिखतु कनके (२) रूप्यके चाथ ताम्रे (३) ।
पाषाणे वा विधिवदभिजप्याथ संस्थापितं त-
च्चक्रं चोरग्रहरिपुभयध्वंसि रक्षाकरञ्च ॥ ५४ ॥

स्थाने हृषीकेशविदर्भितं च साष्टाक्षरञ्चाप्यभिजप्तमेतत् ।
रक्षां ग्रहादेः सततं विधत्ते यन्त्रं सुक्लृप्तञ्च मनुत्रयेण ॥ ५५ ॥

---

(१) "सार्द्धम्" इति पाठान्तरम् ।
(२) "फलके" इति पाठान्तरम् ।
(३) "पत्रे" इति पाठान्तरम् ।

अष्टाक्षरान्तरितपादचतुष्ककोष्ठं
कोष्ठत्रयोल्लिखितसाध्यसुदर्शनञ्च ।
रेखाभिरप्युभयतः श्रुतिशः प्रबद्धं
तत्सप्तकोष्ठमिति यन्त्रमिदं प्रशस्तम् ॥ ५६ ॥

भूर्ज्जे वा चौमपट्टे तनुमसृणतरे कर्पटे वास्य यन्त्रं
मन्त्री सम्यग्लिखित्वा पुनरपि गुलिकीकृत्य लाक्षाभिवीतम् ।
कृत्वा भस्मादिहोमप्रविहितघृतसम्पातपातात्तशक्ति (१)
जप्तं सम्यग्विदध्यात् (२) प्रतिशममुपयान्त्येव सर्व्वे विकाराः ॥ ५७ ॥

[ इति जपहुतार्च्चनाभिर्यन्त्रविशेषैश्च साधु मन्त्रमिमम् ।
भजते योऽसौ मन्त्री लभते भुक्तिं सुखेन मुक्तिञ्च ] (३) ॥ ५८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे द्वाविंशः पटलः ॥ * ॥

---

(१) "पातपातान्तशक्ति" इति पाठान्तरम् ।
(२) "सम्यङ्क्ष्दिध्यात्" इति पाठान्तरम् ।
(३) चिह्नितश्लोकोऽयं पुस्तकान्तरेषु न दृश्यते ।

## त्रयोविंशः पटलः।



अथोच्यते श्रीकरनामधेयमष्टाक्षरं लोकहिताय तावत्।
येन प्रजप्तेन समर्च्चितेन हुतेन सिद्धिं समुपैति मन्त्री ॥ १ ॥
सर्गादर्कः क्षतो विंशतियुगमियुतं शान्तगं चन्द्रबिम्बं
श्रीवाहुः शुक्रमेदो हरिशयनहकारा मनुः श्रीकराख्यः।
ऋष्याद्या वामपङ्क्तौ हरिरपि पुनरङ्गानि यान्तैर्हुमन्तै-
र्भीषित्रासप्रमर्दप्रसहितगदितध्वंसरक्षैर्द्विरुक्तैः ॥ २ ॥
मूर्द्धाक्षिकण्ठहृदयोदरसोरुजानु-
पादद्वयेषु लिपिशो न्यसतु स्वदेहे।
विप्रादिकान्मुखकरोरुपदेषु वर्णा-
श्चक्रादिकानपि करेषु ततस्तदस्त्रान् ॥ ३ ॥
दुग्धाब्धिद्वीपवर्य्यप्रविलसितसुरोद्यानकल्पद्रुमाधो
भद्राम्भोजन्मपीठोपरिगतविनतानन्दनस्कन्धसंस्थः।
दोर्भिर्व्विभ्रद्रथाङ्गं सदरमथ गदापङ्कजे स्वर्णवर्णो
भास्वन्मौलिर्व्विचित्राभरणपरिगतः स्याच्छ्रिये वो मुकुन्दः ॥ ४ ॥
दिक्पत्रेषु श्रीरतिधृतिकान्तीः कोणगेषु मूर्त्तीश्च।
इष्ट्वाभितो निधीशौ विष्वक्सेनञ्च दिक्पतीन् प्रयजेत् ॥ ५ ॥
आराध्य चैवं विधिनाथ विष्णुं मन्त्री पुनर्होमविधिङ्करोतु।
श्रीवृक्षदुग्धोत्थसमिद्भिरब्जैः साज्येन दोग्धेन च सर्पिषा च ॥ ६ ॥
पृथगष्टशतं क्रमेण हुत्वा कनकाद्यैरपि तर्पिते गुरौ च।
अभिषिच्य तथाभिपूज्य विप्रान्मनुमेनं प्रजपेदथाष्टलक्षम् ॥ ७ ॥

द्रव्यैस्तैः प्रतिजुहुयाद्दशांशमानै-
राचार्य्यं पुनरपि पूजयेज्जपान्ते ।
स प्राप्नोत्यपरिमितां श्रियञ्च कीर्त्तिं
कान्तिञ्चाचिरमनुरज्यते च लोकैः ॥ ८ ॥
दूर्व्वां घृतप्रसिक्तां जुहुयादयुतं नरस्तु हुतशिष्टैः ।
आज्यैश्चरुमुपयुञ्ज्याद्दद्याद्गुरवे च दक्षिणां शक्त्या ॥ ९ ॥
परिभोजयेच्च विप्रांस्तेषु दिनेषु स्वशक्तितो भक्त्या ।
अपमृत्युरोगपापान्विजित्य स तु दीर्घमायुराप्नोति ॥ १० ॥
अनुदिनमादित्याभिमुखः प्रजपेदूर्द्ध्वीकृतस्वबाहुयुगः ।
तस्य गृहेऽन्नसमृद्धिश्चिराय संजायते सुष्ठुतरा ॥ ११ ॥
एवं प्रोक्तैः प्रतिजपहुतार्च्चादिभिर्मन्त्रमेनं
भक्त्या यो वा भजति मनुजो नित्यशः सोऽचिरेण ।
इष्टैः पुत्रैर्धनधरणिधान्यादिभिर्हृष्टचेताः
स्यादप्यन्ते परमपरिशुद्धं परं धाम विष्णोः ॥ १२ ॥
अथ कथयामि विधानं महावाराहाभिधानमन्त्रस्य ।
साङ्गं सजपं सहुताराधनमपि मन्त्रिणामभीष्टाप्त्यै ॥ १३ ॥
वाक्यं प्रोक्त्वा हृदाख्यं तदनु भगवते युग्वराहं च रूपा-
येत्युक्त्वा व्याहृतीनामुपरि च पतये भूपतित्वञ्च मेऽन्ते ।
देहीत्याभाष्य दान्तं समतिरथ पुनर्दापयस्वेति हान्तं
प्रोक्त्वा तारादिकं प्रोद्धरतु मनुवरं तं त्रयस्त्रिंशदर्णम् ॥ १४ ॥
ऋषिस्तु भार्गवः प्रोक्तोऽनुष्टुप् छन्द उदीरितम् ।
वराहो देवता चास्य कथ्यन्तेऽङ्गान्यतःपरम् ॥ १५ ॥
अस्यैकशृङ्गो हृदयं शिरोऽपि व्योमोल्कतेजोऽधिपती शिखाच ।
स्याद्विश्वरूपः कवचं महादिदंष्ट्रोऽस्त्रमुक्तं स्वयमेव चाङ्गम् ॥ १६ ॥
सप्तभिः पुनः षड्भिः सप्तभिश्चाथ पञ्चभिः ।
अष्टभिर्मूलमन्त्रार्णैर्व्विदध्यादङ्गकल्पनाम् ॥ १७ ॥

जान्वोरापादमुद्यत्कनकमिव हिमप्रख्यमाजानु नाभेः
कण्ठादानाभि वह्निप्रभमथ शिरसश्चागलं नीलवर्णम् ।
मौलेर्व्योमाभमाकङ्करलसदरिशङ्खासिखेटं गदाग्र-
त्त्याख्येष्टाभीतिहस्तं (१) प्रणमत वसुधोल्लासिदंष्ट्रं वराहम् ॥ १८ ॥
सजलाम्बुवाहनिभमुद्यतदोःपरिघं धराधरसमानतनुम् ।
सितदंष्ट्रिकाधृतभुवं त्वथवा प्रविचिन्तयेत् सपदि कोलममुम् ॥ १९ ॥
हैमप्रख्यं पार्थिवे मण्डले वा नीहाराभं नीरजेऽग्नेस्तदाभम् ।
वायोः कृष्णं द्युप्रभं वा दिविष्ठं क्रोडं व्याप्तं सत्यसंस्थं यजेद्वा ॥ २० ॥
अष्टपत्रमथ पद्ममुल्लसत्कर्णिकं विधिवदारचय्य च ।
मण्डलं रविसहस्रसन्निभं शूकरं यजतु तत्र सिद्धये ॥ २१ ॥
प्राग्दक्षिणप्रत्यगुदग्दिशासु चत्वारि चाङ्गानि यजेत् क्रमेण ।
अस्त्रं विदिक्षूर्द्ध्वमधश्च चक्राद्यस्त्राणि पूज्यानि वराहमूर्त्तेः ॥ २२ ॥
अरिशङ्खकृपाणखेटकसंज्ञान् सगदाशक्तिवराभयाह्वयांश्च ।
अभिपूज्य दिशाधिपान् यथावद्वरगन्धाक्षतपुष्पधूपदीपैः ॥ २३ ॥
दंष्ट्रायां वसुधा सशैलनगरारण्यापगा हुं कृतौ
वागीशी श्वसितेऽनिलो रविविधू वाह्वोश्च दक्षान्ययोः ।
कुक्षौ स्युर्व्वसवो दिशः श्रुतिपथे दस्रौ दृशोः पादयोः
पद्मोत्थो हृदये हरिः पृथगमी पूज्या मुखे शङ्करः ॥ २४ ॥
एवं काले कोलमभ्यर्च्चयित्वा जप्यो मन्त्रोऽसौ पुनर्लक्षसंख्यम् ।
होमं कृत्वा तद्दशांशेश्च पद्मैस्त्रिस्वाद्वक्तैः प्राप्नुयाद्भूसमृद्धिम् ॥ २५ ॥
ध्यानादपि धनसिद्धिर्मन्त्रजपाच्चाधरो भवेत् सधरः ।
जपपूजाहुतविधिभिर्मङ्क्षु नरो धनधरेन्द्रिरावान् स्यात् ॥ २६ ॥

(१) "युक्तम्" इति पाठान्तरम् ।

ध्यात: सन् भूगृहेऽसौ भुवमतुलतरां वारुणे शान्तिमुच्चै-
राग्नेये वश्यकृत्यादिक(१)मनिलपुरस्थोऽयमुच्चाटनादीन्।
रक्षां व्योम्नोऽरिभूतग्रहविषदुरितेभ्योऽनिलाग्न्योश्च पीडाम्
युद्धे वज्रीरयोर्वै जयमपि सुतरां संविधत्ते वराह:॥ २७॥
हरिस्थेऽर्केऽष्टम्यामथ सितरुचौ कोलवपुषा
सितां गव्यैर्युक्तामयुतमभिजप्ता(२)मपि शिलाम्।
उदग्वक्त्रो मन्त्री मनुजपरत: स्थापयतु ता-
मयत्नं क्षेत्रेषु द्रुतमरिनिरोधं शमयति॥ २८॥
भौमे वारेऽथ भानूदयमनुजपवान् सन् गृहीत्वा मृदंशं
कोलात्मा वैरिरुद्धादपि च कुतलतस्तच्च कृत्वा गुणांशम्।
एकं जातौ विलिम्पत्रात् पुनरपरतरं पाकपात्रे तथान्य-
त्तोये तस्मिन् सदुग्धे प्रतिपचतु हवि: संस्कृते हव्यवाहे॥ २९॥
आराध्य चाष्टोर्द्ध्वशतं प्रमाणं साज्येन मन्त्री हविषाथ तेन।
सप्तारवारं (३) जुहुयाद्यथावत् क्षेत्रोत्थितापत्प्रशमं प्रयाति॥ ३०॥
भृगुवारे च मुखेऽङ्क: संगृह्य मृदं हवि: सुसम्पाद्य।
जुहुयादीरितविधिना बलिमपि दद्यान्महीविरोधेषु॥ ३१॥
हुतक्रियैवं दिवसैश्च सप्तभि: प्रणाशयेद्भूमिविवादसङ्कटम्।
प्रेतवेतालपिशाचडाकिनीसमुत्थिताश्चाविकृतिं विधिस्त्वयम्॥ ३२॥
विलोड्य तामेव मृदञ्च दुग्धे हुनेद्घृतेनाष्टयुतं सहस्रम्।
द्विमण्डलादेव मही महार्घ्या स्यान्मन्त्रिणोऽस्यैव तु नि:सपत्ना॥ ३३॥
नृपतरुसमिधामयुतं मन्त्रेणानेन यो हुनेन्मन्त्री।
गृहयात्रा(४)स्य न सीदेत् क्षेत्रादिकमपि वर्द्धते क्रमश:॥ ३४॥
अष्टोर्द्ध्वशतं मन्त्री दिनशो यो वा जुहोति शालीभि:।
स तु वत्सरेण मन्त्री विराजते व्रीहिपुञ्जपूर्णगृह:॥ ३५॥

(१) "वश्यकीर्त्त्यादिकम्" इति पाठान्तरम्।
(२) "सितां गव्यै: सर्वैर्युतमयुतजप्ताम्" इति पाठान्तरम्।
(३) "सप्तारवारे" इति पाठान्तरम्।
(४) "गृहमाला" इति पाठान्तरम्।

मन्त्रेणानेन सर्पिर्जुहुत दशशतं मण्डलात् स्वर्णसिद्धिः
स्वादन्नेनाञ्जलिन्या अपि कुसुमसहस्रेण वा वाससाञ्च ।
लाजानां कन्यकाया अपि च मधुयुजां होमतो वाञ्छिताया:
सिद्धीरक्तोत्पलानामपि मधुरयुजां स्याद्धुताच्छ्रीः समग्रा ॥ ३६ ॥
दण्डार्घीशो व्योमासनस्तु वाराहमुच्यते वीजम् ।
अमुना तु साधितेन प्राप्नुवन्ति नराः सिद्धिमतुलतराम् ॥ ३७ ॥
तारेऽमुमपि (१) लिखित्वा तद्बाह्येऽनलपुरं समापुटितम् ।
तद्बाह्यके चतुर्दलमब्जं स्यात्तद्बहिस्तथाष्टदलम् ॥ ३८ ॥
बाह्ये षोडशपत्रं मण्डलमाखण्डलीयमपि बाह्यम् ।
शूकरवीजे साध्यचेत्राख्यञ्चक्रमन्त्रमस्त्रिषु च ॥ ३९ ॥
रन्ध्रेष्वङ्गमनूनपि दलमूलेऽष्टार्णकेसराणि लिखेत् ।
अष्टावष्टौ दलमनु शूकरमन्त्रस्य चाक्षरान् क्रमशः ॥ ४० ॥
अन्तेऽवशिष्टमक्षरमथाष्टपत्रे स्वराख्यकिञ्जल्के ।
वर्णांश्चतुश्चतुरपि तथाष्टमे पञ्च चालिखेत् पत्रे ॥ ४१ ॥
व्यञ्जनकिञ्जल्केऽन्त्ये द्वौ द्वौ त्रयमन्त्यके दले विलिखेत् ।
तारमहीकोलार्णैः प्रवेष्टयेत् साध्यवर्णपरिपुटितैः ॥ ४२ ॥
तद्बाह्ये मनुवर्णैर्विदर्भिताभिश्च साध्यपदलिपिभिः ।
क्ष्माविम्बचतुष्कोणे गर्भगसाध्याक्षरं भूवीजम् ॥ ४३ ॥
अष्टसु शूलेषु तथा वाराहं वायुगेन संयुक्तम् ।
लाक्षाकुङ्कुमचन्दनलघुकर्पूरैः सरोचनैर्विलिखेत् ।
गोशक्लदम्भोयुक्तैर्लेखन्या हैमया दिने प्रवरे ॥ ४४ ॥
सौवर्णे राज्यसिद्धिं रजतजफलके ग्रामसिद्धिञ्च ताम्रे
साहस्रस्वर्णसिद्धिं भुजदललिखितं चाशु संसाधयेद्राम् (२) ।
क्षौमे लाभं धरायाः पिचुतरुफलके कार्य्यसिद्धिं निजेष्टां
मन्त्रं सञ्जप्तमेतद्घृतहुतक्षतसम्पातपातं करोति ॥ ४५ ॥

(१) "तारमुमपि" इति पाठान्तरम् ।  (२) "संसारयात्राम्" इति पाठान्तरम् ।

मन्त्री समास्थाय वराहरूपं साध्यप्रदेशे निखनेच्च यन्त्रम् ।
स्थिराख्यराशावभिवाह्य कोलमङ्गानि दिक्षु क्षिपतां यथावत् ॥ ४६ ॥
यन्त्रममुं रक्षायै रोगग्रहवैकृतेषु जन्तूनाम् ।
संयज्य (१) शिरसि बध्यात् स तु नीरोगस्त्वयत्नतो भवति ॥ ४७ ॥
इत्येवं प्रणिगदितो वराहमन्त्रो
यस्त्वेनं प्रभजति नित्यशो जपाद्यैः ।
सम्प्राप्नोत्यखिलमहीसमृद्धिमस्मिन्
देहान्ते व्रजति हरेः परं पदं तत् ॥ ४८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे त्रयोविंशः पटलः ॥ * ॥

---

(१) "संजप्य" इति पाठान्तरम् ।

# चतुर्विंशः पटलः ।

अथ प्रवक्ष्यामि नृसिंहमन्त्रस्यानुष्टुभः संग्रहतो विधानम् ।
साङ्गं सजापं सहुतक्रमञ्च सार्चाविधानं निजवाञ्छितास्यै ॥ १ ॥
उग्रं वीरयुतं महान्तिकमथो विष्णुं ज्वलन्तान्वितं
संप्रोक्ताऽथ च सर्व्वतोमुखनृसिंहार्णास्तथा भीषणम् ।
भद्रं मृत्युयुतं च मृत्युमपि तच्चोक्ता नमाम्या युतं
भूयोऽहम्मदमुद्धरेत् मनुमिमं मन्त्री समस्तार्थदम् ॥ २ ॥
ब्रह्मा प्रजापतिर्वा प्रोक्तो ऋषिर्नारदश्च विद्वद्भिः ।
छन्दोऽनुष्टुवुदाहृतमथ विष्णुर्देवता नृसिंहाख्यः ॥ ३ ॥

वर्णैश्चतुर्भिरुदितं हृदयं शिरश्च
तावद्भिरष्टभिरथास्य शिखा प्रदिष्टा ।
षड्भिश्च वर्म्म नयनञ्च चतुर्भिरस्त्रं
प्रोक्तं क्रमेण मनुनाचरशः षडङ्गम् ॥ ४ ॥

सशिरो ललाटदृग्युगमुखकरपत्सन्धिकेषु साग्रेषु ।
उदरहृद्दोर्गलपार्श्वेष्व(१)परे ककुदि क्रमान्न्यसेद्वर्णान् ॥ ५ ॥
प्रतिपत्तिरस्य चोक्ता प्रसन्नताक्रूरताविशेषेण ।
द्विविधा प्रसन्नया स्यात् साधनपूजान्यया प्रयोगविधिः ॥ ६ ॥
जान्वोरासक्ततीक्ष्णस्तनखरुचिलसद्वाहुसंस्पृष्टकेश-
श्चक्रं खड्गञ्च दोर्भ्यां दधदनलसमज्योतिषा ग्रस्तदैत्यः (२) ।
ज्वालामालापरीतं रविशशिदहनत्रीक्षणं दीप्तजिह्वं
दंष्ट्रोग्रं धूतकेशं वदनमपि वहन् पातु वो नारसिंहः ॥ ७ ॥

---

(१) "उदरहृद्दोर्गलपार्श्वपृष्ठेषु" इति पाठान्तरम् ।

(२) "भग्नदैत्यः" इति पाठान्तरम् ।

उद्यद्भास्वत्सहस्रप्रभमशनिनिभं वीचणं विचरन्तं
वक्रीनक्राय विद्युत्ततिविततसटाभीषणं भूषणैश्च ।
दीव्यैरादीप्तदेहं निशितनखलसद्बाहुदण्डैरनेकैः
सम्भिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि ॥ ८ ॥
नरसिंहममुं धियैव पूर्व्वं प्रणिपातार्घ्यकपाद्यसाचमनाद्यैः ।
प्रयजेत् सहगन्धपुष्पधूपादिभिरेवं प्रवरैश्च नृत्यगीतैः ॥ ९ ॥
सुविशदमतिरथ वहिरपि सम्यक् संपूज्य वैष्णवं पीठम् ।
तत्रावाह्य च नरहरिमुपचारैः सम्यगर्च्चयेत्प्रवरैः ॥ १० ॥
अङ्गैः प्रथमा वृतिरपि पचीन्द्रानन्तशर्व्वकमलभवैः ।
सहश्रीह्रीधृतिपुष्टिभिरपरीक्ता लोकपालकैरन्या ॥ ११ ॥
प्राक्प्रत्यग्यमशशिनां दिगाश्रिता मूर्त्तयोऽनलादिषु च ।
स्युः शक्तय इत्येवं भक्त्या परया युतोऽर्च्चयेद्देवम् ॥ १२ ॥
द्वात्रिंशतिकसहस्रैरधिकृतिरयुतैर्भवेत् पुरश्चरणम् ।
तावद्भिस्तावद्भिर्लक्षैः सिद्धिः समीरिता चास्य मनोः ॥ १३ ॥
विकृतिद्विगुणसहस्रैर्जुहुयादाज्यान्वितैश्च दुग्धान्नैः ।
जपपरिपूर्त्तौ मन्त्री दिनशः संपूजयेच्च नरसिंहम् ॥ १४ ॥
विधाय तद्बीजविशिष्टकर्णिकं चतुश्चतुर्व्वर्णलसद्दलाष्टकम् ।
सुलक्षितं मण्डलमन्यलक्षणैर्व्विधाय तस्मिन् कलशं प्रपूज्य(१) च ॥१५॥
यथोक्तमार्गेण समर्च्य साष्टकं सहस्रसंख्यं प्रजपेन्मनुं ततः ।
त्रिरुच्चरन्मन्त्रमथाभिषेचयेद्‌यमेष मृत्योः प्रतिमुच्यते मुखात् ॥ १६ ॥
वर्णान्त्यानलभुवनविन्दुभिरुक्तं नृसिंहवीजमिदम् ।
तन्नास्ति सम्यगमुना मन्त्रविदा साधितेन यदसाध्यम् ॥ १७ ॥
[ ऋष्यादिकमपि पूर्व्ववदङ्गं वीजेन दीर्घयुजा ।
ध्यानार्च्चनादिकमन्यदशेषं समानं स्यात् ] (२) ॥ १८ ॥

---

(१) "प्रपूर्य्य" इति पाठान्तरम् ।

(२) बन्धनीमध्यस्थितोऽयं श्लोकः क्वचित् पुस्तके न दृश्यते ।

विभवानुरूपतोऽस्मै दातव्या दक्षिणा च निजगुरवे ।
प्राणप्रदानकर्त्रे न च कार्य्यं वित्तशाठ्यममलधिया ॥ १९ ॥
संप्रीणयित्वा गुरुमात्मशक्त्या संपूजयेद्विप्रवरान् यथावत् ।
सत्वैहिकीं शुद्धिमवाप्य शुद्धं परं परत्रापि पदं समेति ॥ २० ॥
दूर्व्वात्रिकैरष्टसहस्रसंख्यैराराध्य मन्त्री जुहुयादथाप्सु ।
शान्तिं प्रशान्त्यैव तदोपसर्गा आपोहि शान्ता इति च श्रुतिः स्यात् ॥ २१ ॥
उत्पाते सति महति ह्युपद्रवाणां
होमोऽयं भवति च शान्तिदो नराणाम् ।
यद्यान्यन्निजमनसेप्सितञ्च कामं
तत्प्राप्नोत्यखिलनृणां प्रियञ्च भूयात् ॥ २२ ॥
दुःस्वप्नेष्वपि दृष्टेष्ववशिष्टा जाग्रता निशा नेया ।
जपमानमन्त्रशक्त्या सुस्वप्नो भवति तत्क्षणादेव ॥ २३ ॥
चरन् वने दुष्टमृगाहिघोर(१)व्यालाकुले मन्त्रमिमं जपेद्यः ।
असाधितं साधितमेव तस्य न विद्यते भीर्व्वहुरूपजाता ॥ २४ ॥
जप्तेनाष्टसहस्रं कलशेनाप्यहिविषार्त्तमभिषिञ्चेत् ।
अतिविषमेण विषेणाप्यसौ विमुक्तः सुखी भवति ॥ २५ ॥
मूषिकलूतावृश्चिकबहुपादाद्युद्भवं विषं शमयेत् ।
अष्टोत्तरशतजापान्मनुरयमभिमन्त्रितञ्च भस्माद्यम् ॥ २६ ॥
सशिरोऽक्षिकर्णहृन्नलकुक्षिरुजाज्वरविसर्पवमिहिक्काः ।
मन्त्रौषधाभिचारिकजातान् विकारानयं मनुः शमयेत् ॥ २७ ॥
नरहरिवपुषात्मना गृहीतं हिरण्यकशिपुं निजवैरिणं विचिन्त्य ।
क्षिपतु गगनतः क्षितौ सुदूरं यमनुदिनं प्रति चाद्यते(२) समासात् ॥२८॥

---

(१) "दुष्टमृगाहिचोर" इति पाठान्तरम् ।
(२) "चात्यते" इति पाठान्तरम् ।

याञ्च दिशं प्रति मनुनाचिप्तोऽसौ तां दिशं प्रयात्यचिरात्।
पुत्रकलत्रधनादींस्त्यक्त्वा न पुनर्निवृत्तये सहसा ॥ २९ ॥
नरहरिवपुषात्मना निजारिं खरनखराग्रसमग्रभिन्नदेहम्।
चणमिव निहतं विचिन्त्य खादन्निव जपतां मनुमेष नाशमेति ॥ ३० ॥
पूर्व्वेतरे मृत्युपदे विधाय निजसाध्यनाम मन्त्रितमः।
क्रूरेण चक्षुषा तं दहन्निवालोक्य जपतु सप्तदिनम् ॥ ३१ ॥
दिनशोऽष्टोर्द्ध्वसहस्रं म्रियते रिपुरस्य नात्र सन्देहः।
मारणकर्म न शस्तं क्रियते यद्ययुतमथ जपेच्छान्त्यै ॥ ३२ ॥
वश्याकृष्टिद्वेषणमोहोच्चाटादिकानि यदि वाञ्छेत।
तदर्हया प्रतिपत्त्या तत्तत्कर्म्म प्रसाधयेन्मन्त्री ॥ ३३ ॥

दिनमनु दिननाथं पूजयित्वा दिनादौ
नरहरिमपि सम्यक् प्रोक्तमार्गेण मन्त्री।
तदनु तदनुमत्या भस्मना मन्त्रितेन
प्रतिरचयतु राज्ञे वाप्यभीष्टाय रक्षाम् ॥ ३४ ॥

न्यासोक्तेषु स्थानेष्वपि न्यसेद्भस्मना च मन्त्रार्णान्।
अखिलोपद्रवशान्त्यै सम्पत्त्यै वाञ्छितार्थसिद्धेश्च ॥ ३५ ॥
अथ परराष्ट्रजयेच्छो राज्ञः कुर्य्यात्प्रयोगविधिमेवम्।
नरहरिमपि विधिना तं हिरण्यकशिपुद्विषं समभ्यर्च्य ॥ ३६ ॥
तस्य पुरस्ताद्विधिवन्निधाय वह्निं विभीतकतरुकाष्ठैः।
उज्ज्वलिते च ज्वलने समूलतूलैः शरेषुशतदशकैः ॥ ३७ ॥
खादन्निवोच्चरेन्मनुमरींश्च भिन्दन्निव चिपेत् समिधः।
हुत्वा परराष्ट्रेभ्यः पृतनां सन्नाह्य सम्मुखे तस्याः ॥ ३८ ॥
निघ्नन्तं रिपुसेनां स्मरेन्नृसिंहं पुरेव दितितनयान्।
यावज्जितारिरेष्यति नृपतिस्तावज्जपेत् स्मरन्देवम्।
सेन्द्रसुरासुररक्षोयक्षानपि जयति का कथा मनुजे ॥ ३९ ॥

श्रीकामः श्रीप्रसूनैर्दशकमथ शतानां हुनेद्बिल्वकाष्ठै
स्तत्पत्रैर्वा प्रसूनैः सुमतिरथ समिद्भिः फलैर्वा तदीयैः ।
पुत्रेप्सुः पुत्रजीवेन्धनचितदहने तत्फलैर्वा सहस्रै
र्दूर्वाभिस्त्वायुषेऽब्दादभिमतमखिलं प्राप्नुयान्मन्त्रजापी ॥ ४० ॥
ब्राह्मीं वचां वाष्टशताभिजप्तां प्रातः समद्यान्नृहरिं विचिन्त्य ।
संप्राप्य मेधां स तु वेदशास्त्रनिष्णातधीः स्यादपि वत्सरेण ॥ ४१ ॥

उक्तैः किमत्र बहुभिर्मनुनाऽमुनैव
संप्रार्थितं सकलमेव लभेद्विधिज्ञः ।
तस्मादमुं भजत तत्प्रतिपन्नचित्ताः
संसारसागरसमुत्तरणार्थिनो ये ॥ ४२ ॥
पाशाङ्कुशान्तरितशक्तिनृसिंहबीजे
वर्मास्त्रयुङ्मनुरयं कथितः षडर्णः ।
ऋष्यादिकाः स्वभवपंक्तिकनारसिंहा-
वर्णैश्च मन्त्रनिहितैः कथितं षडङ्गम् ॥ ४३ ॥

अव्यान्निर्व्याजरौद्राकृतिरतिविकृतास्योल्लसत्तीक्ष्णदंष्ट्र
श्चक्रं शङ्खञ्च पाशाङ्कुशकुलिशगदादारणाख्यान्दधानः ।
रत्नाकारश्च नाभेरध उपरि सितो दिव्यभूषाविशेषो
देवोऽर्काग्नीन्दुनेत्रो निखिलसुखकरो नारसिंहश्चिरं वः ॥ ४४ ॥
षट्कोणस्थसुदर्शनं वसुदलप्रोल्लासिताष्टाक्षरं
बाह्ये द्वादशवर्णपत्रकमलं तत् षोड़शार्णच्छदम् ।
द्वात्रिंशन्मनुवर्णपत्रकमलं वृत्तोल्लसन्मातृकं
मध्येऽस्यं भुवमूर्त्तिबीजवलयं चक्रं नृसिंहात्मकम् ॥ ४५ ॥
हृल्लेखान्तःस्थसाध्यं दहनपुरयुगास्त्रिस्थमन्त्रार्णमन्तः
सिंहानुष्टुप्चतुर्व्वर्णकलसितदलाढ्यं कलाकेसरञ्च ।
वृत्तोद्यद्रश्मनावेष्टितमवनिपुरान्तःस्थवृत्तोपलं तद्-
यन्त्रं रक्षःपिशाचामयरिपुविषविध्वंसनं नारसिंहम् ॥ ४६ ॥

इति विरचितयन्त्रप्रोज्ज्वले मण्डले प्राक्
समभिहितकषायाम्भोभिरापूर्य्य कुम्भम् ।
प्रतियजतु तदङ्गैरस्त्रभेदे(१)स्तदीये
स्तदनु शतमखाद्यैः साधु वज्रादिकैश्च ॥ ४७ ॥
रथचरणशङ्खपाशाङ्कुशकुलिशगदाह्वयानि चास्त्राणि ।
दारणमुद्रा करयोर्य्ययोस्तदीयौ कृपाणखेटाख्यौ ॥ ४८ ॥
इति कृतदीक्षः प्रजपेद्दशलक्षप्रमाणात्मकं मन्त्री (२) ।
जुहुयाच्च षट्सहस्रं जपावसाने घृतेन शुद्धेन ॥ ४९ ॥
खरमञ्जरीसमुत्थं जुहुयादथ मञ्जरीसहस्रयुतम् ।
प्रस्नातपञ्चगव्यं सप्तदिनं भूतशान्तये मन्त्री ॥ ५० ॥
छिन्नरुहां समिधां त्रिसहस्रं यश्च जुहोति चतुर्द्दिनमात्रम् ।
दुग्धयुतं न चिरान्मनुजानां होमविधिर्ज्वरशान्तिकरः स्यात् ॥ ५१ ॥
अस्य यन्त्रमभिलिख्य भूर्जके साधु वाथ तृणराजपत्रके ।
मन्त्रजप्तमथ शीर्षबन्धनाज्जूर्त्तिविभ्रमशिरोरुजापहम् ॥ ५२ ॥
रक्तोत्पलैः प्रतिदिनं मधुरत्रयाक्तै-
र्यो वा जुहोति नियमेन सहस्रसङ्ख्यैः ।
मासेन वाञ्छितमवाप्स्यति मन्त्रजापी
स्याद्वत्सरेण धनधान्यसमृद्धगेहः ॥ ५३ ॥
आरक्तैस्तरणिसहस्रकैः प्रफुल्लैरम्भोजैस्त्रिमधुरसंयुतैर्जुहोतु ।
लक्ष्मीः स्यादतिमहती महत्तथायुः संप्राप्य सकलजगत्प्रियश्च भूयात् ॥ ५४ ॥
लाजाभिस्त्रिमधुरसंयुताभिरङ्गो
मासार्द्धं प्रति जुहुयान्मुखे सहस्रम् ।
कन्यार्थी प्रतिलभते वरोऽथ कन्यां
कन्या वा भवति वरार्थिनी वराढ्या ॥ ५५ ॥

---

(१) "अस्त्रभेदैः" इति पाठान्तरम् ।
(२) "मन्त्रम्" इति पाठान्तरम् ।

तिलैः सराजीखरमञ्जरीसमिद्भिर्घृतैश्च द्विसहस्रसंख्यैः ।
प्रजुह्वतो नैव रुजो ग्रहोद्भवा न वाभिचारच्चतिरस्य जायते ॥ ५६ ॥

दशाधिकशतैः पयोघृतयुतैश्च दूर्वात्रयै-
र्हुनेद्दिनमुखे विभुं नरहरिं विचिन्त्यानले ।
अवाप्य स तु दीर्घमायुरखिलैर्व्विमुक्तो गदैः
सुखी भवति मानवो निजकलत्रपुत्रादिभिः ॥ ५७ ॥

विस्तारैः किं प्रतिजपति यो मन्त्रमेनं यथोक्तं
लब्ध्वा कामान् समभिलषितानाशु मन्त्री स भूयात् ।
द्रव्यैराढ्यो द्विजनृपवरैः पूजितः शान्तचेता
देहान्ते स्यात् परमपरिशुद्धं परं धाम विष्णोः ॥ ५८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे चतुर्विंशः पटलः ॥ * ॥

---

## पञ्चविंशः पटलः ।



अथ सम्प्रति विष्णुपञ्जरस्य प्रतिवक्ष्यामि समासतो विधानम् ।
जितवांस्त्रिपुरं हरोऽपि येन त्रिदशानामधिपो वलासुरञ्च ॥ १ ॥
शक्तेर्द्वादशगुणिते यन्त्रे मन्त्राणि मण्डलान्यपि च ।
वीजानि यानि चोक्तान्येभिः क्लृप्तन्तु पञ्जरं विष्णोः ॥ २ ॥
विष्णुं लिखेन्मध्यगशक्तिविन्दौ कपोलयोः सिंहवराहवीजे ।
तद्विश्वरूपाह्वयमन्त्रवीतं प्रवेष्टयेत् षोड़शवर्णकेन ॥ ३ ॥
तारहृदन्ते भगवत्पदं महाविष्णुवासुदेवौ च ङेन्तौ ।
विश्वादिरूपशरणं भव मे प्रभविष्णवे नमः स्यान्मन्त्रः ॥ ४ ॥
द्वादशाक्षरमन्त्रान्ते भवेतां कवचास्त्रकौ ।
स्वाहान्तः षोड़शार्णोऽयं मन्त्रः सर्व्वार्थसाधकः ॥ ५ ॥
क्रमेण तद्वर्णविकारजाताश्चक्रादिकाः षोड़श मूर्त्तयः स्युः ।
याभिस्तु विष्णोरिहपञ्जरस्य प्रवर्त्त्यते शक्तिरनेकरूपा ॥ ६ ॥
यन्त्रस्य वीजेषु चतुर्षु पूर्व्वप्राग्दक्षिणप्रत्यगुदग्गतेषु ।
विद्वांस्तु चक्रञ्च गदाञ्च शार्ङ्गं खड़गञ्च मन्त्रैः सहितं विलिख्यात् ॥ ७ ॥
शङ्खहलमुसलशूलान्यग्न्याद्यश्रिष्वथाष्टवीजेषु ।
विलिखेत् दण्डं कुन्तं शक्तिं पाशाङ्कुशकुलिशपरशुशतमुखवह्नीन् ॥ ८ ॥
सप्रणवहृदयभगवद्विष्णुस्वाख्यानमूर्त्तिधरयुक्ताः ।
सेनापतिसहिता निजमन्त्रान्ता मूर्त्तयोऽत्र लिखितव्याः ॥ ९ ॥
सहस्रारपदं पूर्व्वं कौमोदकी ततो भवेत् ।
महाशार्ङ्गपदं पश्चात् महाखड्गपदं पुनः ॥ १० ॥
प्रोक्तानि वर्म्मास्त्रान्तानि निजमन्त्राणि वै क्रमात् ।
पूर्व्वं महापाञ्चजन्यं महाहलमनन्तरम् ॥ ११ ॥

ततो महामुसलकं महाशूलं ततः परम् ।
स्वाहान्तानि च मन्त्राणि शङ्खादीनां क्रमाद्विदुः ॥ १२ ॥
दण्डादीनामथाष्टानां अन्ते युज्यान्नमःपदम् ।
प्रोक्तं धृतधरं विद्वन् वराहविष्णुभिख्ययोः ॥ १३ ॥
अन्तरा योजयेन्मन्त्री नारसिंहे पुनः सुधीः ।
नखञ्च दलितञ्चैव रिपुविग्रहमेव च ॥ १४ ॥
योजयित्वा नृसिंहात् प्राक् सिंहमन्त्रं समापयेत् ।
विष्णोरन्ते महापक्षिराजाय च गरुत्मते ॥ १५ ॥
हरिपूर्व्वं वाहनाय प्राणात्मन इतीरयेत् ।
नमोऽन्तोऽसौ तु विद्वद्भिर्मन्त्रो गारुत्मतो मतः ॥ १६ ॥
सत्रिष्टुभा वह्निगृहेण पूर्व्वं सानुष्टुभेन्दोर्निलयेन चापि ।
गायत्रमन्त्रोल्लसितेन भूयः संवेष्टयेदर्कनिकेतनेन ॥ १७ ॥
अनुलोमविलोमगैश्च वर्णैरभिवीतं च सुधापुटद्वयेन ।
नलिनं वहिरष्टयुग्मपत्रं प्रविदध्यादथ मूर्त्तिमन्त्रयुक्तम् ॥ १८ ॥
तद्वहिर्मण्डलं सर्व्वलक्षणैरभिलक्षितम् ।
तस्मिन्नावाह्य विधिवद्विश्वरूपं हरिं यजेत् ॥ १९ ॥
अग्नीषोमात्मकमरिगदाशार्ङ्गखड्गैः सशङ्खै-
रुग्रद्धाहुं हलमुसलशूलैः सदण्डैः सकुन्तैः ।
शक्त्या पाशाङ्कुशकुलिशटङ्काग्निभिश्चार्कवह्नि-
द्योतद्वक्त्राङ्घ्रिकसरसिजं तप्तकार्त्तस्वराभम् ॥ २० ॥
विष्णुं भास्वत्किरीटं मणिमुकुट (१) कटीसूत्रकेयूरहार-
ग्रैवेयोर्म्यादिमुख्याभरणमणिगणोल्लासिदिव्याङ्गरागम् ।
विश्वाकाशावकाशप्रविततमयुतादित्यसङ्काशमुद्य-
द्दाह्वग्रव्यग्रनानायुधनिकरधरं विश्वरूपं नमामि ॥ २१ ॥

---

(१) "मणिकटक" इति पाठान्तरम् ।

अभ्यर्च्य पूर्व्ववत् पीठं नवशक्तिसमन्वितम् ।
अर्च्चयेत् क्रमशो विद्वान्मूर्त्तिशक्तिचतुष्टयम् ॥ २२ ॥
चक्रञ्च चक्राङ्ककिरीटमौलिं सशङ्खचक्रं सगदं सशार्ङ्गम् ।
रक्ताम्बरं रक्ततनुं करालदंष्ट्राननं प्राग्दलकेऽर्च्चयीत ॥ २३ ॥
पूज्या गदा गदाङ्कितमौलिः सगदा सचक्रशङ्खधनुः ।
पीताम्बरानुलेपा पीता क्रुद्धा च याम्यसंस्थदले ॥ २४ ॥
शार्ङ्गं शार्ङ्गाङ्कितकं श्यामं शार्ङ्गारिदरगदाहस्तम् ।
रक्तांशुकानुलेपनमाल्यादि वारुणे यजेत् पत्रे ॥ २५ ॥
खड्गं सखड्गशिरसं खड्गारिगदाधनुःकरं धूम्रम् ।
विकृताम्बरानुलेपस्रजं समर्च्चयेदुदक्पत्रे ॥ २६ ॥
शङ्खं सशङ्खशिरसं शङ्खारिगदाधनुःकरं सुसितम् ।
सितवसनमाल्यभूषं यजेन्महानादमग्निसंस्थदले ॥ २७ ॥
शङ्खोक्तचिह्नभूषान् स्वास्वादिकधरचतुर्भुजानपरान् ।
हलमुसलशूलसंज्ञान् संयजेन्निशाटादिकेषु पत्रेषु ॥ २८ ॥
दण्डादिकांस्तथाष्टौ छिद्रदलेष्वर्च्चयीत रक्ताभान् ।
स्वस्वायुधप्रधानांश्चतुर्भुजाञ्छतमखानलान्तांश्च ॥ २९ ॥

दंष्ट्राग्रलग्नवसुधं सजलाम्बुवाह-
चौरत्विषन्त्वभियजेदथ साष्टबाहुम् (१) ।
चक्रासिवाणसगदादरचर्म्मशार्ङ्ग-
शक्त्याख्यकान् दधतमादिमहावराहम् ॥ ३० ॥

अर्कानलोज्ज्वलमुखं नयनैस्त्रिभिश्च वह्निं वमन्तमवधूतसटाकलापम् ।
शुक्लाभभूषमरिशङ्खगदासिबाहुं भूयोऽभिराधयतु (२) खे च महान्नृसिंहम् ॥ ३१ ॥
अग्रे समग्रवलमुग्रतनुं स्वपक्षविक्षेपविक्षतविलक्षविपक्षपक्षम् ।
खड्गाग्रतुण्डममुमखण्डजदण्डनाथमाराधयेदथ च पञ्जरकस्य विष्णोः ॥ ३२ ॥

---

(१) "अभियजेदधरेऽष्टबाहुम्" इति पाठान्तरम् ।

(२) "भूयो यजेदुपरि" इति पाठान्तरम् ।

भूयोऽपि केशवेन्द्रादिकान् समभ्यर्चयेच्चक्रवज्रादीन् ।
गन्धादिभिरुपचारैः पञ्चभिरथ संयतात्मको मन्त्री ॥ ३३ ॥
निजोदितो होमविधिश्च कार्य्यो दीक्षाविधानाभिहिते च वह्नौ ।
ससर्पिषान्नेन तु वह्निमूर्त्तीर्हुत्वा तु विष्णोर्म्मनुना तथैव ॥ ३४ ॥
हुत्वा मनुवर्णसमं षोड़शवर्णं जुहोतु षोड़शशः ।
जुहुयाच्च वासुदेवादिकं शान्त्यादींश्चाथ रुद्रसंख्येन ॥ ३५ ॥
दुग्धतरूत्थाः समिधः क्रमेण चक्रादिभिश्चतुर्मन्त्रैः ।
जुहुयादष्टोर्द्ध्वशतं शङ्खाद्यैर्द्वादशभिरथ मनुभिः ॥ ३६ ॥
तिलसिद्धार्थैर्जुहुयाद्विकारसंख्यं पृथक् पृथङ्मन्त्री ।
त्रिष्टुबनुष्टुप्तत्पदमन्त्रैर्मन्त्रार्णसंख्यकं हविषा ॥ ३७ ॥
सघृतेन केशवाद्यैर्दिनकरसंख्यं तथेन्द्रवज्रादैः ।
जुहुयात् पृथगपि वसुमितमथ च महाव्याहृतीर्हुनेन्मतिमान् ॥ ३८ ॥
आराध्य च विसृज्याग्निमभिषिच्य सुसंयतः ।
विष्णोस्तु पञ्जरं कुर्य्यादृषी ब्रह्मबृहस्पती ॥ ३९ ॥
छन्दस्त्वनुष्टुप् त्रिष्टुप् च मुनिभिः समुदाहृते ।
विश्वरूपादिको विष्णुर्विष्णुपञ्जरदेवता ॥ ४० ॥

अष्टार्णचक्रमनुमध्यगतैश्च पादै-
र्व्यस्तैस्तथा सुमतिरारचयेत् समस्तैः ।
गीतामनोः क्रमश एव तु जातियुञ्जि
पञ्चाङ्गकानि हरिपञ्जरकल्पितानि ॥ ४१ ॥

विष्णुः प्राच्यादिकमथ जपेन्नारसिंहोऽसुरान्तं (१)
त्रींस्त्रीन् मन्त्रान् पुनरपि तथा पञ्चशस्त्वेकविंशम् ।
बुद्धिस्वास्थ्यप्रभृति च तथा पञ्चवारं त्रिगाथां
भूयो जप्याद्विमलधिषितधीश्चक्रमन्त्राभिधानम् ॥ ४२ ॥

---

(१) "अम्बरान्तम्" इति पाठान्तरम् ।

नमो भगवते सर्व्वजिष्णवे विश्वरूपिणे।
वासुदेवाय चक्रादिसर्व्वायुधभृते नमः ॥ ४३ ॥
अर्केन्दुवह्निनिलयस्फुरितत्रिमन्त्र-
शक्तिप्रवृद्धमहसः परमस्य विष्णोः।
पादारविन्दगलितामृतसिक्तगात्रं
साध्यं स्मरेज्जपविधावपि साधकेशः ॥ ४४ ॥
विष्णोः सान्निध्यलब्धोल्लसितचलचलद्धस्तदण्डोद्यतास्त्रै-
श्चक्राद्यैर्भीषणास्यैश्चणचरणवचोहासहुङ्कारघोरैः।
उत्क्षिप्ताक्षिप्तकृत्तस्फुटितविदलितांश्चूर्णितध्वस्तगात्रान् (१)
ध्यायेद्वेतालभूतग्रहदुरितपिशाचारिनागादिरोगान् ॥ ४५ ॥
पूर्व्वं स्थाने हृषीकेशमन्त्रयुक्तं विधानवित्।
विश्वरूपात्मकं जप्याद्वैष्णवं मूलमन्त्रकम् ॥ ४६ ॥
योजयित्वा जपेत् पश्चात् चक्रादिषु यथाक्रमम्।
चतुर्षु चतुरः पादान् गीतात्रिष्टुप्समुद्भवान् ॥ ४७ ॥
पूर्णेषु षोड़शस्त्वेवमाद्यं पादं वराहके।
द्वितीयं नारसिंहे च तृतीयं गारुड़े पुनः ॥ ४८ ॥
चतुर्थं चक्रमन्त्रे च योजयित्वा जपेत् सुधीः।
मन्त्रं सुदर्शनं चेत्थमिममष्टाक्षरं मनुम्।
संयोज्य कृच्छ्रे महति जपेन्मन्त्री विधानवित् ॥ ४९ ॥

अथ प्रयोगाक्षरमाह।

आग्नेये वक्ष्यमाणेन विधानेन समाहितः।
सिकतोपलचर्व्वादीन् साधयेदथ तैः क्रियाम् ॥ ५० ॥
वास्तौ पुरे वा ग्रामे वा विदध्याद्विषयेऽपि वा।
मध्ये च षोड़शाशान्ते खनेदष्टादशावटान् ॥ ५१ ॥

---

(१) "चूर्णितध्वस्तशान्तान्" इति पाठान्तरम्।

अष्टादशन्तु चक्रस्य (१) विदध्यात् पुरतोऽवटम् ।
हस्तागाधां(२)स्तथायामांश्चतुरस्रान् समन्ततः ॥ ५२ ॥
अन्योन्यतश्चंक्रमार्थं शुद्धान् मार्गान् विधाय च ।
गोमयेनोपलिप्यैतानानीय स्थाप्य वस्त्वपि ॥ ५३ ॥
शुक्लपुष्करपत्रेषु निदध्याद्विंशतिष्वपि ।
ततो मध्यगकुण्डस्य प्रविश्य पुरतो गुरुः ॥ ५४ ॥
तदन्तरिष्टा पीठञ्च तत्र यन्त्रमनुस्मरन् ।
स्थापयेद्वैष्णवे स्थाने विश्वरूपधिया सुधीः ॥ ५५ ॥
ततः क्रमेण चक्रादीन् दिक्कुण्डेषु चतुर्ष्वपि ।
पुनः शङ्खादिकांस्तद्वत् कुण्डेष्वस्राश्रितेष्वपि ॥ ५६ ॥
तथा दण्डादिकानष्टौ छिद्राशासु प्रकल्पयेत् ।
मध्ये पुनरधश्चोर्द्ध्वं कोलकेसरिणौ यजेत् ॥ ५७ ॥
चक्रेऽस्य प्राक्तने कुण्डे स्थापयेद्विनतासुतम् ।
ततः समस्थलीकृत्य क्रमात् समुपलिप्य च ॥ ५८ ॥
प्रत्यगासनमासीनो मध्यगस्थण्डिले स्थिते ।
यन्त्रे काञ्चनपट्टस्थे पूजयेत् पूर्व्ववत् प्रभुम् ॥ ५९ ॥
वादित्रघोषबहुलं निवेद्यान्नं (३) यथाक्रमम् ।
हुनेच्च पूर्व्वसन्दिष्टैर्द्रव्यैः पूर्व्वोक्तमानतः ॥ ६० ॥
आशोपाशान्तराशासु वलिं दद्यात्त्रिशस्त्रिशः ।
क्रमाच्चक्रादिमूर्त्तीनां पञ्चकृत्वोऽन्धसा सुधीः ॥ ६१ ॥
तत उद्वास्य देवेशं पूजां परिसमाप्य च ।
दत्त्वा सुवर्णवासांसि गुरवे ब्राह्मणानपि ॥ ६२ ॥

---

(१) "मध्यस्य" इति पाठान्तरम् ।
(२) "अस्तागाधान्" इति पाठान्तरम् ।
(३) निवेद्यान्ते यथाक्रमात्" इति "निवेद्यात्तम्" इति वा पाठान्तरम् ।

प्रतर्प्य विभवैः सम्यक् भोजयेद्देवताधिया ।
तत्रोपसर्गा नश्यन्ति नरनारीमहीस्थिताः ॥ ६३ ॥
ग्रहक्षुद्रपिशाचाद्या नेचन्ते तान्दिशं भयात् ।
अश्मपातादिका ये च भया नश्यन्ति तेऽचिरात् ॥ ६४ ॥
शस्यर्द्धिर्गोसमृद्धिश्च प्रजावृद्धिश्च जायते ।
धनधान्यसमृद्धिश्च वर्द्धते तत्कुलं क्रमात् ।
दारिद्र्यरोगनिर्म्मुक्तं सुखमाभूतसंप्लवम् ॥ ६५ ॥

रक्षोभिरक्षतबलैरसुरैश्च दैत्यैः
सर्व्वैः समुद्यतमहास्त्रधरैः परीतम् ।
विष्णोस्तु पञ्जरमिदं प्रभजन्तमव्यात्
साक्षादपीन्द्रसमरेऽत्र जने कथा का ॥ ६६ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे पञ्चविंशः पटलः ॥ * ॥

---

# षड्विंशः पटलः ।

अथाभिवक्ष्यामि मनुं समासात् प्रासादसंज्ञं जगतो हिताय ।
येन प्रजप्तेन यथार्च्चितेन हुतेन सिद्धिं लभते यथेष्टाम् ॥ १ ॥
प्रसादनत्वान्मनसो यथावत् प्रासादसंज्ञास्य मनोः प्रदिष्टा ।
अन्त्यात्तृतीयः प्रतिलोमतः स्यादनुग्रहार्द्धेन्दुयुतश्च मन्त्रः ॥ २ ॥
ऋषिरस्य वामदेवः पङ्क्तिश्छन्दश्च देवतेशः स्यात् ।
तेनैवाक्षीवकलादीर्घयुजाङ्गानि तस्य वीजेन ॥ ३ ॥
शूलाही टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीर्दधानं
दोर्भिः शीतांशुखण्डप्रतिघटितजटाभारमौलिं त्रिनेत्रम् ।
नानाकल्पाभिरामापघनमभिमतार्थप्रदं सुप्रसन्नं
पद्मस्थं पञ्चवक्त्रं स्फटिकमणिनिभं पार्व्वतीशं नमामि ॥ ४ ॥
[ईशानादीन् मन्त्रवित् पञ्चमन्त्रानङ्गुष्ठादिष्वङ्गुलीषु क्रमेण ।
न्यस्येदज्भिर्युतक्रमाद्व्योमगाभिर्ङ्खाख्याभिस्ताभिरेवाङ्गुलीभिः] (१) ॥ ५ ॥
ईशानस्तत्पुरुषाघोराख्यौ वामदेवसंज्ञश्च ।
सद्योजाताह्वय इति मन्त्राणां देवताः क्रमात् पञ्च ॥ ६ ॥
मूर्द्धाननहृद्गुह्यकपादेषु च नामभिः स्ववीजाद्यैः ।
ऊर्द्धप्राग्दक्षोदक्पश्चिमजेष्वाननेषु विन्यसेत् ॥ ७ ॥
प्रतिपाद्य निजं शरीरमेवं प्रजपेदिन्द्रियलक्षकं शिवात्मा ।
जुहुयाच्च दशांशतस्तदन्ते मधुराक्तैः करवीरजप्रसूनैः ॥ ८ ॥
अथवा कुसुमैर्जवासमुत्थैः कमलैर्व्वा विमलेन पायसेन ।
नृपवृक्षभवैः समिद्वरैर्व्वा जुहुयात् साधकसत्तमः समृद्धैर ॥ ९ ॥

---

(१) चिह्नितश्लोकोऽयं क्वचित् पुस्तके न दृश्यते ।

अष्टपत्रगुणवृत्तराशिभिर्वीथिकल्पतरुभिः समावृतम्।
मण्डलं प्रतिविधाय शूलिनः पीठमत्र नवशक्तिभिर्यजेत्॥ १०॥
वामा ज्येष्ठा रौद्री काल्याख्या (१) कलवलाद्यविकारिणी।
सबलप्रमथिनिसर्व्वभूतदमन्यौ मनोन्मनीञ्च यजेत्॥ ११॥
तारादिकं नतिमपि प्रोक्ता भगवत्पदं चतुर्थ्यन्तम्।
सकलगुणात्मपदान्ते शक्तियुक्ताय चेति सम्भाष्य॥ १२॥
भूयोऽनन्तायेति च योगान्ते पीठात्मने चेति।
नमसा युक्तं ब्रूयात् पीठाख्योऽयं मनुः समुद्दिष्टः॥ १३॥
न्यासक्रमेण देहे मन्त्री गन्धादिभिः समभ्यर्च्य।
पूर्व्वोक्ता दिक्षु मूर्त्तीर्विदिक्षु सनिवृत्तिपूर्व्विकाश्च यजेत्॥ १४॥
सद्यो वेदाक्षमाला(२)भयवरदकरः कुन्दमन्दारगौरो
वामः काश्मीरवर्णोऽभयवरदपरश्वक्षमालाविलासी।
अक्षस्रग्वेदपाशाङ्कुशडमरुखट्वाङ्गशूलान् कपालं
विभ्राणो भीमदंष्ट्रोऽञ्जनरुचिरतनोर्भीतिदश्चाप्यघोरः॥ १५॥
विद्युद्वर्णोऽथ वेदाभयवरदकुठारान् दधत् पूरुषाख्यः
प्रोक्ताः सर्व्वे त्रिनेत्रा विधृतमुखचतुष्काश्चतुर्व्वाहवश्च।
मुक्तागौरोऽभयेष्टाधिककरकमलो घोरतः पञ्चवक्त्र-
स्त्वीशो ध्येयोऽम्बुजन्मोद्भवमुररिपुरुद्रेश्वराः स्युः शिवान्ताः॥ १६॥
भूतानां शक्तित्वाद्दशात्वाज्जगति वा निवृत्त्याद्याः।
तेजोरूपाः करपदकर्णविहीना (३) मनीषिभिः प्रोक्ताः॥ १७॥
अनन्तसूक्ष्मौ च शिवोत्तमश्च तथैकपूर्व्वावपि नेत्ररुद्रौ।
त्रिमूर्त्तिश्रीकण्ठशिखण्डिनश्च प्रागादिपत्रेषु समर्च्चनीयाः॥ १८॥

---

(१) "रौद्रिकाम्बिकाख्या" इति पाठान्तरम्।
(२) "सद्यो वेदाक्षमाला" इति पाठान्तरम्।
(३) "करपदवर्णविहीनाः" इति पाठान्तरम्।

शूलाग्निशरचापोग्रासिदोर्दण्डभीषणाः सर्व्वे ।
पद्मासनाश्च नानाविधभूषणभूषितास्त्रिनेत्राश्च ॥ १९ ॥
पाटलपीतसिताऽरुणशितिरक्तशितिप्रभाश्च धूम्रान्ताः ।
कोटीरकोटिघटितविलसच्छशिकलायुताश्च भूर्त्तयः क्रमशः ॥ २० ॥
उमा चण्डेश्वरो नन्दी महाकालो गणेश्वरः ।
वृषभृङ्गिरिटिस्कन्दाः संपूज्याश्चोत्तरादिकाः ॥ २१ ॥
कनकविदूरजविद्रुममरकतमुक्तासिताच्छरक्ताभाः ।
पद्मासनसंस्थाश्च क्रमादुमाद्या गुहान्तिकाः प्रोक्ताः ॥ २२ ॥
पुनराशेशास्तदनु च कुलिशाद्या दिक्क्रमेण संपूज्याः ।
प्रासादविधानमिदं निगदितमिति सकलवर्गसिद्धिकरम् ॥ २३ ॥
अमुना विधिना महेशपूजां दिनशो यः कुरुते समाहितात्मा ।
स तु सम्यगवाप्य दृष्टभोगान् परमन्ते परिपूर्णमिति धाम ॥ २४ ॥
वक्ष्यामि शैवागमसारमष्टत्रिंशत्कलान्यासविधिं यथावत् ।
सपञ्चभिर्ब्रह्मभिरीशपूर्व्वैः सर्षादिकैः साङ्गविशेषकैश्च ॥ २५ ॥
ईशोऽनुष्टुब्भूरीश्वरास्तत्पुरुषसंज्ञगायत्र्यापः ।
पुनरघ्न्यनुष्टुवापो वामकृतिभगा हरस्त्वनुष्टुब्भगयुक् ॥ २६ ॥
इन्द्रियतारसमेतं सर्व्वज्ञायेति हृच्छिरस्त्वमृते ।
तेजोमालिनि पूर्व्वं तृप्ताये ब्रह्मशिरस इति कथितम् ॥ २७ ॥
ज्वलितशिखिशिखान्ते त्वनादिबोधाय चान्वितेह शिखा ।
वज्रिणि वज्रधराय स्वान्ते तन्त्रायेति वर्म्म नेत्रञ्च ॥ २८ ॥
सौ चौ ह्रौ विन्दुयुतं संप्रोक्ताऽलुप्तशक्तये च तथा ।
श्रौ पशु हुं फट् (१) अनन्तशक्तये तथा चास्त्रं स्यात् ।
समुनिच्छन्दोदैवतयुक्तं तदङ्गषट्कमिति कथितम् ॥ २९ ॥
करदेहमुखन्यासं मन्त्री पूर्व्ववदाचरेत् (२) ।
कलाः प्रविन्यसेद्देहे वक्ष्यमाणक्रमेण तु ॥ ३० ॥

---

(१) 'श्लौं पशु हुं फट्' इति पाठान्तरम् । (२) ''मन्त्रैः पूर्व्ववदाचरेत्'' इति पाठान्तरम् ।

ताः स्युः पञ्च चतस्रोऽष्टौ त्रयोदश चतुर्द्वयम् ।
अष्टत्रिंशत्कलाः सम्यक् न्यस्तव्या मन्त्रवित्तमैः ॥ ३१ ॥
दिक्षु प्राग्याम्यवारीड्वसुपनिजभुवामिन्द्रवारार्किराज्ञां
हृद्ग्रीवांसद्वयीनाभ्युदरचरणवक्त्रःसगुह्याण्डयोश्च ।
सोर्व्वोर्जान्वोः सजङ्घास्फिगुभयकटिपार्श्वे च पद्दोस्तनेषु (१)
घ्राणे के बाहुयुग्मेष्वपि विशदमतिर्व्विन्यसेदङ्गुलीभिः ॥ ३२ ॥
विन्यासः प्रतिमाकृतौ च नितरां सान्निध्यकृत् स्यादयं
देहे वापि शरीरिणां निगदितः सान्निध्यकारीति च (२) ।
आस्ते यत्र तथामुनैव दिनशो विन्यस्तदेहः पुमान्
चेत्रं देशमसुञ्च योजनमितं शैवागमज्ञा विदुः ॥ ३३ ॥
न्यस्यैवं पञ्चभिर्ब्रह्मभिरथ शिवमाराधयेद्दग्भिराभि-
र्मध्यप्राग्याम्यसौम्यापरदिशि पुनरङ्गैरनन्तादिभिश्च ।
अन्योमाद्यैर्द्दिशापैः पुनरपि कुलिशाद्यैर्यजेद्देवमुक्तं
पाञ्चब्राह्मं विधानं सकलसुखयशोभुक्तिमुक्तिप्रदञ्च ॥ ३४ ॥
पञ्चाक्षरविहितविधिं वक्ष्ये जपतामभीष्टसिद्धिकरम् ।
सिद्धेन येन देही प्रेत्येह च वाञ्छितं पदं (३) लभते ॥ ३५ ॥
दीर्घौ विषो विसर्गी मृत्युः साक्षी च सघाक्षरः पवनः ।
ताराङ्कवति यदस्मात्तदादिरभिधीयते मनुप्रवरः ॥ ३६ ॥
अस्याक्षराण्यमूनि च पञ्च स्युः पञ्चभूतगानि तथा ।
जगदपि भूतारब्धं तेन हि जगदात्मतोदितास्य मनोः ॥ ३७ ॥
प्रोक्तस्त्वृष्यादिकं पूर्व्वमङ्गवर्णैस्तु मन्त्रजैः ।
अङ्गुलीदेहवक्त्रेषु मूलमन्त्राक्षरादिकान् ॥ ३८ ॥

---

(१) "पादोरुस्तनेषु" इति पाठान्तरम् ।
(२) "सामर्थ्यकारीति च" इति पाठान्तरम् ।
(३) "निजेप्सितञ्च" इति पाठान्तरम् ।

न्यसेत्तत्पुरुषाघोरसद्योवामेशसंज्ञकान् ।
सतर्ज्जनीमध्यमान्त्यानामिकाङ्गुष्ठकेषु च ॥ ३९ ॥
वक्त्रहृत्पादगुह्याख्यमूर्द्धस्वपि च नामभिः ।
प्राग्याम्यवारुणोदीच्यवक्त्रेष्वपि च मूर्द्धनि ॥ ४० ॥
बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्व्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्म्मात्तवासाः ।
ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पञ्चवक्त्र-
स्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिःकलोत्तुङ्गमौलिः ॥ ४१ ॥
अक्षरलक्षचतुष्कं जप्यात्तावत्सहस्रमपि जुहुयात् ।
शुद्धैस्तिलैर्घृतैर्व्वा दुग्धान्नैर्दुग्धभूरुहैर्धैर्व्वा ॥ ४२ ॥
तत्पुरुषाद्याः सर्व्वे प्राधान्यसंप्रोक्तवाहुहेतियुताः ।
उल्लसितमुखचतुष्कास्तेजोरूपो विलक्षणस्त्वीशः ॥ ४३ ॥
आवृतिराद्या मूर्त्तिभिरङ्गैरन्यापराप्यनन्ताद्यैः ।
अपरोमादिभिरपरेन्द्राद्यैरपरा तदायुधैः प्रोक्ता ॥ ४४ ॥
कथयामि मनोर्व्विधानमन्यन्मुनिपूज्यं प्रवरं पिनाकपाणेः ।
स्वतनौ परिकल्प्य पीठमङ्गान्यपि विन्यस्य तथैव मन्त्रवर्णान् ॥ ४५ ॥
हृन्मुखांसोरुयुग्मेषु षड् वर्णान् क्रमशो न्यसेत् ।
कण्ठमूले तथा नाभौ पार्श्वयुक्पृष्ठहृत्सु च ॥ ४६ ॥
मूर्द्धास्यनेत्रघ्राणेषु दोःपत्सन्ध्यग्रकेषु च ।
सशिरोवक्त्रहृदयजठरोरुपदेष्वपि ॥ ४७ ॥
हृदाननपरश्वेणाभीत्याख्यवरदेषु च ।
मुखांसहृदयेषु त्रीन् परान् पादोरुकुक्षिषु ॥ ४८ ॥
ऊर्द्ध्वाधः क्रमशः कुर्य्याद्गोलकन्यासमुत्तमम् ।
पुनस्तत्पुरुषाघोरसद्योवामेशसंज्ञकान् ॥ ४९ ॥
ललाटजठरहंसहृदयेषु क्रमान्न्यसेत् ।
पुनस्तत्प्रतिपत्त्यर्थं जपेन्मन्त्रमिमं सुधीः ॥ ५० ॥

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गावृतात्मने (१) ।
चतुर्मूर्त्तिवपुश्छायाभासिताङ्गाय शम्भवे ॥ ५१ ॥
कुर्य्यादनेन मन्त्रेण निजदेहे समाहितः ।
मन्त्री पुष्पाञ्जलिं सम्यक् त्रिशः पञ्चश एव च ॥ ५२ ॥
पूर्व्वोक्त एव पीठे प्रागङ्गैर्मूर्त्तिभिः शक्तिभिस्तदनु ।
वृषपालचण्डदुर्गागुहनन्दिगणपसैन्यपाः पूज्याः ॥ ५३ ॥
पूज्याश्च वासवाद्याः पुनरुपहारैः क्रमेण भक्तिमता ।
अभ्यर्च्चिते हुते च स्तोतव्यः संस्तवेन पुनरीशः ॥ ५४ ॥
नमो विरिञ्चिविष्ण्वीशभेदेन परमात्मने ।
सर्गसंस्थितिसंहारव्याहृति(२)व्यक्तमूर्त्तये ॥ ५५ ॥
नमश्चतुर्द्दशप्रोद्भूतभूतभीतात्मने भुवः ।
भूरिभारार्त्तिसंहर्त्रे भूतनाथाय शूलिने ॥ ५६ ॥
विश्वग्रासाय विलसत्कालकूटविषाशिने ।
तत्कलङ्काङ्कितग्रीवनीलकण्ठाय ते नमः ॥ ५७ ॥
नमो ललाटनयनप्रोल्लसत्कृष्णवर्त्मना ।
ध्वस्तस्मरनिरस्ताधियोगिध्येयाय शम्भवे ॥ ५८ ॥
नमो देहार्द्धकान्ताय दग्धदक्षाध्वराय च ।
चतुर्व्वर्गेष्वभीष्टार्थदायिने (३) मायिनेऽणवे ॥ ५९ ॥
स्थूलाय मूलभूताय शूलदारितविद्विषे ।
कालहन्त्रे नमश्चन्द्रखण्डमण्डितमौलये ॥ ६० ॥
विवाससे कपर्द्दान्तर्भ्रान्ताहिसरिदिन्दवे (४) ।
देवदैत्यासुरेन्द्राणां मौलिघृष्टाङ्घ्रये नमः ॥ ६१ ॥

---

(१) "ज्योतिर्लिङ्गात्मतात्मने" इति पाठान्तरम् ।
(२) "व्यावृत्तिव्यक्तमूर्त्तये" इति पाठान्तरम् ।
(३) "चतुर्व्वर्गेष्वभीष्टार्थदायिने" इति पाठान्तरम् ।
(४) "कपर्द्दान्तर्भ्रान्ताहिसरिदिन्दवे" इति पाठान्तरम् ।

भस्माभ्यक्ताय भक्तानां भुक्तिमुक्तिप्रदायिने ।
व्यक्ताव्यक्तस्वरूपाय शङ्कराय नमो नमः ॥ ६२ ॥

नमोऽन्तकान्धकरिपवे पुरद्विषे
नमोऽस्तु ते द्विरदवराहभेदिने ।
विषोल्लसत्फणिवरबद्धमूर्त्तये
नमः सदा वृषवरवाहनाय ते ॥ ६३ ॥

वियन्मरुद्धुतवहवार्व्वसुन्धरा-
मखेशरव्यमृतमयूखमूर्त्तये ।
नमः सदा नरकभयापभेदिने
भवेह नो भवभयभङ्गकृद्विभो ॥ ६४ ॥

सुखेन्दुखण्डपरिमण्डितमौलिमेव
मुद्वासयेत् पुनरमुं हृदयाम्बुजे स्वे ।
अभ्यर्च्य देहमपि संयतचित्तवृत्ति-
र्भूत्वा शिवो जपतु मन्त्रमहेशमेनम् ॥ ६५ ॥

सन्तर्प्य विप्रान् पुनरेवमेव सम्पूजयेदिन्दुकलावतंसम् ।
जपेद्यथाशक्ति शिवस्वरूपी भूत्वा तथान्ते च शिवः स भूयात् ॥ ६६ ॥
अमुमेव मनुवरं मनुलक्षं हृल्लेखया अभितो निरुद्धम् ।
जप्वा नृपतरुसमिधां मधुरयुजां मनुसहस्रमपि जुहुयात् ॥ ६७ ॥

वन्दे हरं वरदशूलकपालहस्तं
साभीतिमद्रिसुतयोज्ज्वलदेहकान्तिम् ।
वामोरुपीठगतया निजवामहस्त-
न्यस्तारुणोत्पलयुजा परिरब्धदेहम् ॥ ६८ ॥

आवृतिरङ्गैराद्या हृल्लेखाद्याभिरनु वृषाद्यैश्च ।
मात्राऽऽशेशैरुक्तं (१) पञ्चावरणं विधानमीशस्य ॥ ६९ ॥

---

(१) "मात्रा शेषैरुक्तम्" इति पाठान्तरम ।

आप्यायनी शशियुताप्यरुणाग्निमाया
विन्दन्तिका च नकुली भुवनेन्दुयुक्ता ।
दीर्घी कलायुतविषा च शिवाय वर्णाः
स्याच्छूलिनो मनुरयं वसुवर्णयोगी ॥ ७० ॥

वामाङ्कन्यस्तवामेतरकरकमलायास्तथा वामबाहु-
न्यस्तारक्तोत्पलायाः स्तनविधृतलसद्वामबाहुः प्रियायाः ।
सर्व्वाकल्पाभिरामो धृतपरशुमृगेष्टः करैः काञ्चनाभो
ध्येयः पद्मासनस्थः स्मरललिततनुः सम्पदे पार्व्वतीशः ॥ ७१ ॥

पञ्चार्णोक्ताङ्गाद्यः पञ्चब्रह्मप्रदिष्टपूजश्च ।
वसुमितलक्षजपोऽयं मन्त्रस्तावत्सहस्रहोमश्च ॥ ७२ ॥

इति जपहुतपूजाध्यानकैरीशयाजी-
प्रियतरचरितः स्यात् सर्व्वतो देहभाजाम् ।
धनविभवयशःश्रीसम्पदा दीर्घजीवी
तनुविपदि च शैवं तत्परं धाम भूयात् ॥ ७३ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे षड्विंशः पटलः ॥ * ॥

## सप्तविंशः पटलः ।



अथ प्रवक्ष्यते मन्त्रो दक्षिणामूर्त्तिसंज्ञितः ।
जपतामिष्टसंसिद्धिविधानसुरपादपः ॥ १ ॥
अद्रिक्षिणा कालकर्णकामिकायुग्ययेक्षराः ।
तुष्यामध्यगताः स्युर्ध्यं वटमूलनिवासिने ॥ २ ॥
नैधात्वनिरताङ्गाय नमो रुद्राय शम्भवे ।
तारशक्तिनिरुद्धोऽयं मन्त्रः षट्त्रिंशदक्षरः ॥ ३ ॥
शुकः प्रोक्तो मुनिश्छन्दोऽप्यनुष्टुप् समुदाहृतम् ।
दक्षिणामूर्त्तिरुद्रोऽस्य देवता समुदाहृता ॥ ४ ॥
तारशक्त्यादिकैर्ङ्गामाद्यन्तैर्मन्त्राक्षरैः क्रमात् ।
ऋत्वक्षिवसुवस्वग्निगुणवर्णैर्विभागशः ॥ ५ ॥
मन्त्री कुर्य्यात् षड़ङ्गानि जातियुञ्जि समाहितः ।
कालिकस्रुतिदृग्गण्डहृदयनासास्यके दश ॥ ६ ॥
दोःसन्धिकण्ठाननहृन्नाभिकट्यन्घ्रुषु क्रमात् ।
पत्सन्धिषु पुनर्द्वाभ्यां मन्त्रविद्व्यापकं न्यसेत् ।
एवं न्यस्तशरीरोऽथ चिन्तयेन्मन्त्रदेवताम् ॥ ७ ॥
मुद्रां भद्रार्थदात्रीं सपरशुहरिणां बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजगवरसमाबद्धकक्षो वटाधः ।
आसीनश्चन्द्रखण्डप्रतिघटितजटः क्षीरगौरस्त्रिनेत्रो
दद्यादाद्यैः शुकाद्यैर्मुनिभिरभिवृतो भावशुद्धिं भवो वः ॥ ८ ॥
प्राक् प्रोक्तविधानेन च सम्यक् संपूज्य साधु कलशाद्यैः ।
कृतसंदीक्षो मन्त्री जप्यादेमं मनुं समाहितधीः ॥ ९ ॥

द्वात्रिंशदयुतमानं प्रतिजप्य जुहोतु तद्दशांशमितै: ।
दुग्धाप्लुतैस्तिलैर्वा साज्येन पयोन्धसा द्वयेनापि ॥ १० ॥
जप्त्वैवं मन्त्रमेनं दिनमनु गिरिशं पूजयित्वा च हुत्वा
स्तुत्वा नत्वा मनोवाक्तनुभिरवहित: प्राप्य कामानशेषान् ।
व्याख्याता चागमानां भुवि कविषु वर: साधु वेदान्तवेदी
वादी चाद्वैतविद्याफलममलतरं याति शैवं पदं तत् ॥ ११ ॥
सजीवशिखिकर्णरेफान् प्रतिवीप्स्य प्रादिकांश्च पुनरपि तान् ।
मेधाप्यायनियान्तांस्तानेव तरान्तिकान् सतनुरूपान् ॥ १२ ॥
आभाष्य चटप्रचटौ सकहवमौ बन्धघातयौ वीप्स्य ।
प्रोक्ता वर्मास्त्रावधि समुद्धरेच्छक्तिपूर्व्वकं मन्त्रम् ॥ १३ ॥
(ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्ध बन्ध घातय घातय हुं फट् (१) ॥
ऋषिरस्याघोराख्य: संप्रोक्तस्त्रिष्टुबुच्यते च्छन्द: ।
रुद्रोऽप्यघोरपूर्व्व: संप्रोक्ता देवतास्य मनो: ॥ १४ ॥
हृत् पञ्चभिस्तदर्णै: शिरोऽपि षड्भि: शिखा तथा दशभि: ।
तावद्भिरेव कवचं दृगष्टभिर्द्वादशभिरपि चास्त्रम् ॥ १५ ॥
कदृगास्यकण्ठहृन्नाभ्यन्धूरुषु जानुजङ्घयो: पदयो: ।
एकादशधाभिन्नैर्मन्त्रार्णैर्न्यसतु विग्रहे मन्त्री ॥ १६ ॥
पञ्चभिरथो सषड्भिर्द्वाभ्यामप्यष्टभिश्चतुर्भिश्च ।
षड्भिश्चतुस्त्रयेण च षड्भिर्द्वाभ्याञ्च भेदितै: क्रमश: ॥ १७ ॥
कालाभ्राभ: कराग्रै: परशुडमरुकौ खड्गखेटौ च वाणे-
ष्वासौ शूलं कपालं दधदतिभयदो भीषणास्यस्त्रिनेत्र: ।
रक्ताकाराम्बरोऽहिप्रवरघटितगात्रोऽरिनागग्रहादीन्
खादन्निष्टार्थदायी भवदनभिमतोच्छित्तये स्यादघोर: ॥ १८ ॥

---

(१) बन्धनीमध्यस्थितमन्त्रस्तु पुस्तकान्तरे न दृश्यते ।

स्वच्छो मुमुक्षोस्तु भवेदघोरः काम्यक्रियायामपि रक्तवर्णः ।
कृष्णोऽभिचारे ग्रहवैकृते च प्रोक्तो जपः स्यादपि लक्षमानः ॥ १९ ॥
घृतावसिक्तैस्तिलतण्डुलैश्च जपावसाने जुहुयाद्दशांशम् ।
घृतप्लुतैर्व्वाथ हविर्भिरेव तावत्प्रजुह्वन् समुपैति कामान् ॥ २० ॥
हृल्लेखास्थितसाध्याक्षरविलसत्कर्णिकं कलावीतम् ।
वर्गाष्टकान्तकेसरमन्ते सहलक्षयाक्षरोल्लसितम् ॥ २१ ॥
मन्त्राक्षरत्रयोद्द्यद्दलमध्यदलाग्रकञ्च तद्बाह्ये ।
वह्निपुटाश्रिसमाश्रितकवचास्त्रं प्रतिविलिख्य यन्त्रमिदम् ॥ २२ ॥
कृत्वा समाप्य मण्डलमत्र विनिःक्षिप्य पूरयेत् कलशम् ।
पीठे पिनाकपाणेर्गव्यैर्व्वा क्वाथकृततोयैर्व्वा ॥ २३ ॥

अङ्गावृतेरनु च हेतिभिरीरिताभिः
पश्चाच्च मातृभिरथापि दिशाधिनाथैः ।
संपूजयीत विधिनेति षड़क्षरोत्थ-
मार्गेण वा मनुपरिस्फुरणाय मन्त्री ॥ २४ ॥

आज्यापामार्गसमित्तिलसर्षपसाज्यकैश्च पृथक् ।
रात्रौ सहस्रहोमाद्भूतापस्मारादिशान्तिरुद्दिष्टा ॥ २५ ॥
सितकिंशुकनिर्गुण्डीकनकापामार्गजन्मनां समिधाम् ।
पृथगपि सहस्रहोमान्निग्रहमोक्षोऽचिराद्ग्रहाणां स्यात् ॥ २६ ॥
गव्याक्तैर्जुहुयात् पृथग्दशशतं मन्त्री मयूरेध्मकै-
र्भूयस्तैः प्रतिभोजयेत् प्रतिशमं यान्त्येव सर्व्वे ग्रहाः ॥ २७ ॥
षट्कोणे कर्णिकायां स्फुरयुगलयुतां (१) साध्यगर्भाञ्च शक्तिं
कोणाख्ये प्रस्फुरद्वन्द्वकमथ विलिखेन्मन्त्रवर्णान् दलेषु ।
षट्के दद्वन्द्वषट्के दकचतुयगषट्संख्यकान् वाह्यषट्के
वर्म्मास्त्राख्यं तदेतद्ग्रहगदभयहृद्यन्त्रमाघोरमाहुः ॥ २८ ॥

---

(१) "घुरयुगलयुताम्" इति पाठान्तरम् ।

न च रिपवो न च रोगा न ग्रहपीड़ा न शस्त्रबाधा च ।
न च्वेलरुजो मर्त्यान् स्पृशन्त्यघोरास्त्रमन्त्रजापरतान् ॥ २९ ॥
तस्मादघोरास्त्रमनुं प्रजप्यात् समर्चयेत्तद्विहितं विधानम् ।
हुनेच्च तेनैव समस्तवाञ्छासंसिद्धये चाथ विमुक्तये च ॥ ३० ॥

खसप्तमः कर्णयुतोऽर्द्धचन्द्रवान्
कुपञ्चमो द्वीन्दुयुतो ध्रुवादिकः ।
मनुस्त्वयं मृत्युजयात्मकः स्फुटं
समीरितः साधकरञ्जणञ्चमः ॥ ३१ ॥

ऋषिरस्य कहोलाख्यः छन्दो देव्यादिका च गायत्री ।
स्याद्देवता च मृत्युञ्जयरुद्रोऽङ्गान्यथाचरेङ्गृगुणा ॥ ३२ ॥

पुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा
गलदमृतजलार्द्रं चन्द्रवह्न्यर्कनेत्रम् ।
स्वकरकलितमुद्रापाशवेदाक्षमालं
स्फटिकरजतमुक्तागौरमीशं नमामि ॥ ३३ ॥

जप्तव्योऽयं मन्त्रवर्य्यस्त्रिलक्षं दीक्षापूर्व्वं होमकृत्स्याद्दशांशैः ।
दुग्धाज्याक्तैः शुद्धखण्डैर्गुड़च्या गुर्व्वादेशात् साधको हव्यवाहे ॥ ३४ ॥
अर्चा कार्य्या नित्यशः शैवपीठे स्यादप्यङ्गैर्लोकपालैस्तदस्त्रैः ।
सम्यक् पूजावस्तुभिर्मन्त्रजापी प्रोक्तं ह्येतन्मृत्युजेतुर्व्विधानम् ॥ ३५ ॥
इति जपहुतार्चनादिभिः सिद्धो मन्त्रोक्तविहिततनुः ।
समाचरेन्निजान्तर्योगं कृत्यापमृत्युनाशकरम् ॥ ३६ ॥
तारनालमथ मध्यपत्रकं ह्याद्यकर्णिकयुतं क्रमोत्क्रमात् ।
चिन्तयेन्नियतमन्तरा शिवं नीरुजे च नियतायुषेऽक्षयोः ॥ ३७ ॥

ऊर्द्धाधः प्रोतपद्मद्वयदलनिहितैरक्षरैस्तैर्ध्रुवाद्यै-
राद्यन्तैर्मन्दमन्दप्रतिगलितसुधापूरसंसिच्यमानम् ।
ईशानं सूक्ष्मरूपं विमलतरसुषुम्नान्तरा सन्निषण्णं
ध्यायन्नाप्नोति रोगैर्नियतपरिहृतस्तज्जपाद्दीर्घमायुः ॥ ३८ ॥

आदौ तारं विलिखतु ससाध्याह्वयं कर्णिकायां
दिक्पत्रेष्वप्यपरमपरं वापि तत्कोणकेषु ।
भूयो भूमिः परमनु मृगाङ्कं तदस्त्रेषु ढान्तं (१)
जप्त्वा बन्ध(२)ग्रहगदविषध्वंसि यन्त्रं तदेतत् ॥ ३९ ॥

इति कृतयन्त्रविभूषितमण्डलमध्ये निधाय कलशमपि ।
आपूर्य चाभिषिञ्चेच्छ्रीवश्यकरं ग्रहाभिचारहरम् ॥ ४० ॥

चतुरङ्गुलिपरिमाणैरमृताकाण्डैरथार्कसाहस्रम् ।
जुहुयाच्च दुग्धसिक्तैरारोग्यायायुषे च लक्ष्म्यै च ॥ ४१ ॥

ततश्छिन्नोद्भवानाञ्च समिद्भिश्चतुरङ्गुलैः ।
दुग्धसिक्तैः समिद्धेऽग्नौ षट्सहस्रद्वयं हुनेत् ॥ ४२ ॥

यस्तु वह्नौ जुहोत्येवं यावत्संख्येन साधकः ।
तावत्संख्यैः सुधाकुम्भैरग्निः प्रीणाति शङ्करम् ॥ ४३ ॥

आप्यायितोऽग्निना सर्व्वः साधकस्येप्सितान् वरान् ।
प्रदद्यादायुरारोग्यांश्च दुरन्तान् प्रलयान्तिकान् ॥ ४४ ॥

मन्त्रान्ते साध्याख्यां पालययुगलं प्रतीपमपि मन्त्रम् ।
प्रोक्त्वा समापयेन्मनुमयमपि मृत्युञ्जयाह्वयो मन्त्रः ॥ ४५ ॥

अथवाऽमलकमलपुटान्तरितं शिशुवेशभूषणं रुद्रम् ।
ध्यात्वा जप्याद्यथावद्भूतकृत्या मृत्युनाशनं दृष्टम् ॥ ४६ ॥

अमृता वटतिलदूर्व्वाः पयो घृतं पायसं क्रमेणेति ।
सप्तद्रव्याण्युक्तान्येतैर्जुहुयात् पृथक् सहस्रत्रयम् ॥ ४७ ॥

तीव्रज्वरे घोरतरेऽभिचारे सोन्मादके दाहगदे च मोहे ।
तनोति शान्तिं न चिरेण होमः सञ्जीवनं चाब्दशतप्रमाणम् ॥ ४८ ॥

सम्भोजयेद्धोमदिनेषु विप्रान् सप्ताधिकान् स्वादुभिरन्नभोज्यैः ।
सतर्णका गाश्च हुतावसाने दद्याद्द्विजेभ्यो हुतकर्म्मकृद्भ्यः ॥ ४९ ॥

---

(१) "टान्तम्" इति पाठान्तरम् ।

(२) "वज्रम्" इति पाठान्तरम् ।

निजजन्मदिने शतं शतं यो जुहुयाद्द्रव्यवरैश्च सप्तसंख्यैः ।
मधुरैः प्रतिभोजयेच्च विप्रानभिवाञ्छन्नियमेन दीर्घमायुः ॥ ५० ॥
अथवा सप्तभिरेतैर्द्रव्यैरेकेण वा सहस्रत्रितयम् ।
जन्मर्क्षहोममात्रान्निरुपद्रवमुत्तमं व्रजेदायुः ॥ ५१ ॥
दूर्व्वात्रितयैः पयसा जुहुयादेकादशाहुतीर्दिनशः ।
जित्वापमृत्युरोगान् प्रयात्यसावायुषश्च दैर्घ्यमपि ॥ ५२ ॥
जन्मर्क्षाणां त्रितये छिन्नाकाश्मर्य्यवकुलजैरिध्मैः ।
क्रमशो हुनेत् सहस्रं नश्यन्त्यपमृत्युरोगदुरितानि ॥ ५३ ॥
सितसिद्धार्थैः सहस्राहुत्या नश्यन्त्युपद्रवा ज्वरजाः ।
तद्वदपामार्गहुतान्मृत्युञ्जयमप्यरोगतां लभते ॥ ५४ ॥
प्रोक्तैर्ध्यानजपार्च्चनाहुतविधानाद्यैश्च मृत्युञ्जयं
यो मन्त्री प्रभजेन्मनुं प्रतिदिनं प्रातः प्रसन्नाशयः ।
तस्येष्टानि भवन्ति सम्भृति(१)रपि स्फीता च पुत्रादयः
सम्पन्नाः सुसुखी च जीवति चिरं देहापदि स्याच्छिवः ॥ ५५ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे सप्तविंशः पटलः ॥ * ॥

---

(१) "संहृतिः" इति पाठान्तरम् ।

## अष्टाविंशः पटलः ।

अथ सजपहुताद्यैर्वक्ष्यते साधुचिन्ता-
मणिरभिमतकामप्राप्तिकल्पद्रुमोऽयम् ।
अनलकषमरेफप्राणसत्यान्तवाम-
श्रुतिहिमरुचिखण्डैर्मण्डितो मन्त्रराजः ॥ १ ॥

ऋषिरपि काश्यप उक्तश्छन्दोऽनुष्टुब्देवता महेशः ।
यान्तैः षड्भिर्वर्णैरङ्गं वा देवतार्द्धनारीशः ॥ २ ॥

अहिशशधरगङ्गाबद्धतुङ्गात्ममौलि-
स्त्रिदशगणनताङ्घ्रिस्त्रीक्षणस्त्रीविलासः ।
भुजगपरशुशूलान् खड्गवह्नी कपालं
शरमपि धनुरीशो बिभ्रदव्याच्चिरं वः ॥ ३ ॥

हावभावललितार्द्धनारिकं भीषणार्द्धमथवा महेश्वरम् ।
पाशसोत्पलकपालशूलिनं चिन्तयेज्जपविधौ विभूतये ॥ ४ ॥

अथवा षोड़शशूलव्यग्रभुजा त्रिनयनाऽहिनद्धाङ्गी ।
अरुणांशुकानुलेपनवर्णाभरणा च भगवती ध्येया ॥ ५ ॥

विहितार्च्चनविधिरथानुदिनं प्रजपेद्दशायुतमितं मतिमान् ।
अयुतं हुनेत्त्रिमधुरार्द्रतरैस्तिलतण्डुलैस्तदवसानविधौ ॥ ६ ॥

शैवोक्तपीठाङ्गपदैर्यथावद्वह्ने च दुर्गैर्नगसैर्मुखाद्यैः ।
समातृभिर्दिक्पतिभिर्महेशं पञ्चोपचारैर्विधिनार्च्चयीत ॥ ७ ॥

आरभ्यादिज्वलनं दिक्संस्थैरष्टाभिर्मनोर्वर्णैः ।
आराधयेच्च मातृभिरिति संप्रोक्तः प्रयोगविधिरपरः ॥ ८ ॥

कात्पूर्व्वं हंसलिपिसंयुतं जपादौ
जप्तॄणां प्रवरमितीह केचिदाहुः ।
प्रासादाद्ययुतजपेन मङ्क्षु कुर्य्या-
दावेशादिकमपि नीरुजाञ्च मन्त्रः ॥ ९ ॥

शिरसोऽवतरन्निशेशविम्बस्थितमज्भिर्वृतमागलत्सुधार्द्रम् ।
अपमृत्युहरं विषज्वरापस्मृतिविभ्रान्तिशिरोरुजापहञ्च ॥ १० ॥

निजवर्णविकीर्णकोणवैश्वानरगेहद्वितयावृतत्रिकोणम् ।
विगतस्वरवीतमुत्तमाङ्गे स्मृतमेतत् क्षपयेत् क्षणात् ग्रहार्त्तिम् ॥ ११ ॥

वह्नेर्विम्बे वह्निवत् प्रज्वलन्तं न्यस्त्वा वीजं मस्तके ग्रस्तजन्तोः ।
ध्यात्वा वेशं कारयेद्वन्धुजीवं तज्जप्तं वा सम्यगाघ्रापणेन ॥ १२ ॥

शुक्लादिः शुक्लभाः पौष्टिकशमनविधौ कृष्टिवश्येषु रक्तो
रक्तादिः क्षोभसंस्तोभनविधिषु हकारादिको हेमवर्णः ।
धूम्राङ्गो मर्द्दनोच्चाटनविधिषु समीरादिको मादिरुक्तः
पीताभः स्तम्भनादौ मनुरतिविमलो मुक्तिभाजामनादिः ॥ १३ ॥

कृष्णाभं प्राणगेहस्थितमथ नयने ध्यातमान्ध्यं विधत्ते
वाधिर्य्यं कर्णरन्ध्रेऽर्द्दितमपि वदने कुक्षिगं शूलमाशु ।
मर्म्मस्थाने समीरं सपदि शिरसि वा दुःसहं शीर्षरोगं
वाग्रोधं कण्ठनालेऽवनिवृतमथ तन्मण्डले वीजमेतत् ॥ १४ ॥

प्रालेयत्विषि च स्वरावृतमिदं नेत्रे स्मृतं तद्रुजं
योनौ वामदृशामसृक्स्रुतिमथो कुक्षौ च शूलं जयेत् ।
विस्फोटे सविषे ज्वरे त्वषि तथा रक्तामये विभ्रमे
दाहे शीर्षगदे स्मरेद्विधिमिमं सन्तृप्तये मन्त्रवित् ॥ १५ ॥

साध्याया हृदयकुशेशयोदरस्थं
प्राणाख्यं दृढ़मभिवध्य वीजवर्णैः ।
तेजस्तच्छिरसि विधुं विधाय वा
तेनाकर्षेदपि निजवाञ्छयेव मन्त्री ॥ १६ ॥

पारिभद्रसुमनोदलभद्रं वह्निबिम्बगतमक्षरमेतत् ।
संस्मरेच्छिरसि यस्य स वश्यो जायते न खलु तत्र विचारः ॥ १७ ॥
निजनामगर्भमथ बीजमिदं प्रविचिन्त्य योनिसुषिरे सुदृशः ।
वशयेत् क्षणाच्छिततया मनसः स्रवयेच्च शुक्रमथवा रुधिरम् ॥ १८ ॥
निजशिवशिरःस्थितं तद्बीजं स्मृत्वा प्रवेशयेद्योनौ ।
यस्यास्तत्सम्पर्कात्ताञ्च स्रवयेत् क्रमेण वशयेच्च ॥ १९ ॥
परेफगर्भधृतसाध्यपदं त्रिकगं हुताशयुगषट्कवृतम् ।
विगतस्वरावृतमगारभुवि स्थितमेतदाशु वशयेद्रमणात् ॥ २० ॥
मधुरत्रयसंयुतेन शालीरजसा पुत्तलिकां विधाय तेन ।
मनुना जुहुयात्तथा विभज्य त्रिदिनं यस्य कृते वशी भवेत् सः ॥ २१ ॥
विषपावकोद्यदभिधानपदं ठगतं कुकोणधृतलाङ्गलिकम् ।
अहिपत्रक्लृप्तपरिजप्तमिदं शिरसो रुजं प्रशमयेददनात् ॥ २२ ॥
कण्ठे केनावरुद्धार्पितदहनयुजा मज्जया मेन वामं
दक्षं संवेष्ट्य वक्षोरुहमनलसमीरैभिरंसद्वयस्य ।
वह्नौ नाभौ च दीर्घं सुमतिरथ विनिःक्षिप्य बिन्दुं निशेशं
वक्षस्याधाय बद्ध्वा चिरमिव विहरेत् कन्दुकैरात्मसाध्यैः ॥ २३ ॥
कृत्वा वह्नेः पुरमनु मनुं बन्धुजीवेन तस्मि-
न्नाधायाग्निं विधिवदभिसंपूज्य चाज्यैः शताख्यम् ।
त्रैलोह्याख्ये प्रतिविहितसंपातमष्टोत्तरं त-
ज्जुत्वा जप्तं दुरितविषवेतालभूतादिहारि ॥ २४ ॥
साध्याख्यागर्भमेनं लिख दहनपुरे कर्णिकायां षडस्रं
बाह्यास्त्रिष्वङ्गमन्त्रान् दलमनु परितो बीजवर्णान् विभज्य ।
भूयोऽचः कादियादींस्त्रिषु (१) वृतिषु कुगेहास्त्रके नारसिंहं
तस्मिन् कार्य्यो यथावत्कलशविधिरयं सर्व्वरक्षाकरः स्यात् ॥ २५ ॥

---

(१) "कादिपादांस्त्रिषु" इति पाठान्तरम् ।

टान्ते लिख्यात् कलाभिर्वृतममु(१)मनलावासयुग्मेन वह्नि-
द्योतत्कोणेन वाह्ये तदनु सविटविम्बेन कार्य्यार्णभाजा।
तद्वाह्ये च्मापुराभ्यां लिखितनृहरियुक्तास्रकाभ्यां तदेतद्-
यन्त्रं रक्षाकरं स्याद्ग्रहभयविषमक्ष्वेलजूर्त्यादिरोगे ॥ २६ ॥
विम्बद्वन्द्वे कृशानोर्व्विलिखतु मनुमेनं ससाध्यं तदस्रि-
ष्वग्न्यादीन् व्यञ्जनार्णान् स्वरयुगलमथो सन्धिषट्के यथावत्।
तारावीतञ्च वाह्ये कुगृहपरिवृतं गोमयाद्रोचनाभ्यां
लाक्षाबद्धं निबध्याज्जपमहितमिदं साधु साध्योत्तमाङ्गे ॥ २७ ॥
लक्ष्म्यायुः पुष्टिकरं परञ्च सौभाग्यवश्यकृत् सततम्।
चोरव्यालमहोरग(२)भूतापस्मारहारि यन्त्रमिदम् ॥ २८ ॥
साध्याख्याकर्म्मयुक्तं दहनपुरयुगे मन्त्रमेनं तदस्रि-
ष्वग्निज्वालाश्च वाह्ये विषतरुविटपे साग्रशाखे लिखित्वा।
जप्त्वाष्टोर्द्ध्वं सहस्रं नृहरिकृतधिया स्थापयेत्तत्र शत्रु-
व्याघ्रादिक्रोड़चोरादिभिरपि च पिशाचादयो न व्रजन्ति ॥ २९ ॥

सिद्धसुरपूजितः सकलवर्गसंसाधको
ग्रहज्वरविषापहो विविधकामकल्पद्रुमः (३)।
किमत्र बहुना नृणामभिमतार्थचिन्तामणिः
समुक्त इह संग्रहान्मनुवरस्तु चिन्तामणिः ॥ ३० ॥
षष्ठस्वरो हुतवहस्तु पयोस्तुरीया-
वादिस्वरो मनुरयं कथितः फड़न्तः।
अस्य त्रितो निगदितो मुनिरप्यनुष्टुप्-
छन्दश्च चण्डसहितो मनुदेवतेशः ॥ ३१ ॥

---

(१) "वृतमनुम्" इति पाठान्तरम्।
(२) "महोरग" इत्यत्र "महारोग" इति पाठान्तरम्।
(३) "ग्रहज्वररुजापहो विषविषर्पिदोषापहः" इति पाठान्तरम्।

दीप्तज्वलज्ज्वालिनिभिस्तटेन च हनेन च ।
सर्व्वज्वालिनिसंयुक्तैः फडन्तैरङ्गमारभेत् ॥ ३२ ॥

अव्यात् कपर्दकलितेन्दुकलःकरात्तशूलाक्षसूत्रककमण्डलुटङ्क ईशः ।
रक्ताभ्रवर्णवसनो(१)ऽरुणपङ्कजस्थो नेत्रत्रयोल्लसितवक्त्रसरोरुहो वः ॥ ३३ ॥

कृतसन्दीक्षो मन्त्री जप्याल्लक्षत्रयञ्च मन्त्रमिमम् ।
जुहुयात्त्रिमधुरयुक्तैः सतिलैरपि तण्डुलैर्द्दशांशेन ॥ ३४ ॥
व्याघातसमिद्भिर्व्वा मनुजापी तावतीभिरथ जुहुयात् ।
पूर्व्वोक्त एव पीठे गन्धाद्यैरर्च्चयेच्च चण्डेशम् ॥ ३५ ॥
चण्डचण्डाय चेत्युक्त्वा प्रवदेद्विद्महे पदम् ।
चण्डेश्वराय च प्रोक्त्वा धीमहि पदमुद्धरेत् ॥ ३६ ॥
तन्नश्चण्ड इति प्रोक्त्वा ब्रूयाद्भूयः प्रचोदयात् ।
एषा तु चण्डगायत्री जपात् सान्निध्यकारिणी ॥ ३७ ॥
अङ्गैः समातृभिर्मन्त्री लोकेशैः संप्रपूजयेत् ।
कूर्म्मो विष्णुयुतो दण्डी बीजमस्योच्यते बुधैः ॥ ३८ ॥
वदेच्चण्डेश्वरायेति बीजादिहृदयान्तिकम् ।
अर्च्चनादिष्विमं मन्त्रं यथावत् सम्प्रयोजयेत् ॥ ३९ ॥
एवं जपहुतार्च्चाभिः सिद्धे मन्त्रे तु मन्त्रिणः ।
वाञ्छितादधिकं लभ्येत् काञ्चनं नात्र संशयः ॥ ४० ॥
अक्षरस्य जपो यावत्तावज्जप्यात् षडक्षरम् ।
ऐहिकामुष्मिकीं सिद्धिं तथा हि लभते नरः ॥ ४१ ॥

कृत्वा पिष्टेन शाल्याः प्रतिकृतिमनलं चापि काष्ठैश्चितानां
आधायारभ्य पुंसस्त्रिमधुरलुलितं दक्षिणाङ्गुष्ठदेशात् ।
छित्वा छिन्नाष्टयुक्तं शतमथ जुहुयाद् योषितो वामभागा-
द्विप्रादीनां चतुर्णां वशकरमनिशं मन्त्रमेतद्धुतान्तम् ॥ ४२ ॥

(१) "रक्ताभवर्णवसनः" इति पाठान्तरम् ।

अनुदिनमष्टशतं यो जुहुयात् पुष्पैरनेन मन्त्रेण।
सप्तदिनैः स तु लभते वासस्तद्वर्णसङ्काशम् ॥ ४३ ॥
अहरहरष्टशतं यो मन्त्रेणानेन तर्पयेदीशम्।
तस्य तु मासचतुष्कादर्व्वाक् सञ्जायते महालक्ष्मीः ॥ ४४ ॥
साध्यर्क्षाङ्घ्रिपचर्म्मणा सुमहता पिष्टेन लोणैः कृतां
छित्त्वा (१) पुत्तलिकां प्रतिष्ठितचलां जप्त्वा च रात्रौ हुनेत्।
सप्ताहं पुरुषोऽङ्गना यदि चिरं वश्यस्त्ववश्यश्भवे-
दस्मिन् जन्मनि नात्र चोद्यविषयो देहान्तरे संशयः ॥ ४५ ॥
इति चण्डमन्त्रविहितं विधिवद्विधिमादरेण य इमं भजते।
स तु वाञ्छितं पदमिहाप्य पुनः शिवरूपतामपि परत्र लभेत ॥ ४६ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे अष्टाविंशः पटलः ॥ * ॥

---

(१) "पिष्टेन लोणेन वा कृत्वा" इति पाठान्तरम्।

# एकोनत्रिंशः पटलः ।

अथाखिलार्थानुगतैव शक्तिर्युक्ता चतुर्व्विंशतितत्त्वभेदैः ।
गायत्रिसंज्ञापि च तद्विशेषान् सहप्रयोगान् प्रवदामि साङ्गान् ॥ १ ॥
ताराह्वयो व्याहृतयश्च सप्त गायत्रिमन्त्रः शिरसा समेतः ।
अन्वर्थकं मन्त्रमिमन्तु वेदसारं पुनर्व्वेदविदो वदन्ति ॥ २ ॥
जप्यः स्यादिह परलोकसिद्धिकामैर्मन्त्रोऽयं महिततरो द्विजैर्यथावत् ।
भूदेवा नरपतयस्तृतीयवर्णाः संप्रोक्ता द्विजवचनेन तेऽत्र भूयः ॥ ३ ॥
तेषां शुद्धकुलद्वयोत्थमहसामारभ्य तान्तुक्रियां
तारव्याहृतिसंयुता सहशिरो गायत्र्युपास्या परा ।
सन्ध्योपासनया जपेन च तथा स्वाध्यायभेदैरपि
प्राणायामविधानतो मतिमतां ध्यानैस्तथा नित्यशः ॥ ४ ॥
आदौ तारः प्रकृतिविकृतिप्रोत्थितोऽसौ च मूला-
धारादारादलिरुतिरिवाविश्य सौषुम्नमार्गम् ।
आद्यैः शान्तावधिभिरनुगो मात्रया सप्तभेदैः
शुद्धो मूर्द्धावधिपरिगतः शाश्वतोऽन्तर्व्वहिश्च ॥ ५ ॥
प्रकाशितादौ प्रणवप्रपञ्चता निगद्यते व्याहृतिसप्तकं पुनः ।
सभूर्भुवः स्वश्च महोजनस्तपःसमन्वितं सत्यमिति क्रमेण च ॥ ६ ॥
भूपदाद्या व्याहृतयो भूशब्दस्तदि वर्त्तते ।
तत्पदं सदिति प्रोक्तं सन्मात्रत्वात्तु भूरतः ॥ ७ ॥
भूतत्वात् कारणत्वाच्च भुवः शब्दस्य सङ्गतिः ।
सर्व्वस्य स्वीरणात् स्वात्मतया च स्वरितीरितम् ॥ ८ ॥
महत्त्वाच्च महस्त्वाच्च महः शब्दः समीरितः ।
तदेव सर्व्वजननात्तस्मात्तु व्याहृतिर्जनः ॥ ९ ॥

तपो ज्ञानतया चैव तथा तापतया स्मृतम् ।
सत्यं परत्वादात्मत्वादनन्तज्ञानतः स्मृतम् ॥ १० ॥
प्रणवस्य व्याहृतीनामतः सम्बन्ध उच्यते ।
अकारो भूरुकारस्तु भुवो मार्ण: स्वरीरितः ॥ ११ ॥
बिन्दुर्महस्तथा नादो जनः शक्तिस्तपः स्मृतम् ।
शान्तं सत्यमिति प्रोक्तं यत् स्यात् परतरं पदम् ॥ १२ ॥
प्रणवस्य व्याहृतीनां गायत्र्यैक्यमथोच्यते ।
अत्रापि तत्पदं पूर्व्वं प्रोक्तं तदनु वर्ण्यते ॥ १३ ॥
तद्द्वितीयैकवचनमनेनाखिलवस्तुनः ।
सृष्ट्यादिकारणं तेजोरूपमादित्यमण्डले ॥ १४ ॥
अभिध्येयं (१) सदानन्दं परं ब्रह्माभिधीयते ।
यत्तत् सवितुरित्युक्तं षष्ठ्येकवचनात्मकम् ॥ १५ ॥
धातोरिह विनिष्पन्नं प्राणिप्रसववाचकात् ।
सर्व्वासां प्राणिजातीनामिति प्रसवितुः सदा ॥ १६ ॥
वरेण्यं वरणीयत्वात् सेवनीयतया तथा ।
भजनीयतया सर्व्वैः प्रार्थनीयतया स्मृतम् ॥ १७ ॥
पूर्व्वस्याष्टाक्षरस्यैवं व्याहृतिर्भूरिति स्मृता ।
पापस्य भर्ज्जनाद्भर्गो भक्तस्निग्धतया तथा ॥ १८ ॥
देवस्य वृष्टिदानादिगुणयुक्तस्य नित्यशः ।
प्रभूतेन प्रकाशेन दीप्यमानस्य वा तथा ॥ १९ ॥
ध्यै चिन्तायामतो धातोर्निष्पन्नं धीमहीत्यदः ।
निगमाद्येन दिव्येन विद्यारूपेण चक्षुषा ॥ २० ॥
दृश्यो हिरण्मयो देव आदित्यो नित्यसंस्थितः ।
हीनतारहितं तेजो यथा स्यात् स हिरण्मयः ॥ २१ ॥

---

(१) "अभिधेयम्" इति पाठान्तरम् ।

यः सूक्ष्मः सोऽहमित्येवं चिन्तयामः सदैव तु ।
द्वितीयाष्टाक्षरस्यैवं व्याहृतिर्भुव ईरिता ॥ २२ ॥
धियो बुद्धीर्मनोरस्य छान्दसत्वाद्द य ईरितः ।
कृतश्च लिङ्गव्यत्यासः सूत्रात् सुप्तिङुपग्रहात् ॥ २३ ॥
यत्तु तेजो निरुपमं सर्व्ववेदमयात्मकम् ।
भजतां पापनाशस्य हेतुभूतमिहोच्यते ॥ २४ ॥
न इति प्रोक्त आदेश षष्ठ्यसौ युष्मदस्मदोः ।
तस्मादस्माकमित्यर्थः प्रार्थनायां प्रचोदयात् ॥ २५ ॥
तृतीयाष्टाक्षरस्यापि व्याहृतिः स्वरितीरिता ।
एवं दशपदान्यस्यास्त्रयश्चाष्टाक्षराः स्मृताः ॥ २६ ॥
षड़क्षराश्च चत्वारः स्युश्चतुर्व्विंशदक्षराः ।
इत्यम्भूतं यदेतस्य देवस्य सवितुर्व्विभोः ॥ २७ ॥
वरेण्यं भजतां पापविनाशनकरं परम् ।
भर्गोऽस्माभिरभिध्यातं धियस्तन्नः प्रचोदयात् ॥ २८ ॥
उक्तैवमत्र गायत्री पुनस्तच्छिर उच्यते ।
आपो ज्योतीरस इति सोमाग्न्योस्तेज उच्यते ॥ २९ ॥
तदात्मकं जगत् सर्व्वं रसस्तेजोद्वयं स्मृतम् ।
अमृतं तदनाशित्वाद्बृहत्वाद्ब्रह्म उच्यते ॥ ३० ॥
यदानन्दात्मकं ब्रह्म सत्यज्ञानादिलक्षणम् ।
तद्भूर्भुवः स्वरित्युक्तं सोऽहमित्योमुदाहृतम् ॥ ३१ ॥
एतत्तु वेदसारस्य शिरस्त्वाच्छिर उच्यते ।
लक्षणैरिति निर्द्दिष्टे वेदसारे सुनिष्ठितः ॥ ३२ ॥
फलार्थी फलमाप्नोति मुमुक्षुर्मोक्षमृच्छति ।
उषस्यूषसि चोत्थाय कृतशौचविधिर्द्विजः ॥ ३३ ॥
दन्तानां धावनञ्चैव जिह्वानिर्लेखनादिकम् ।
कृत्वा स्नात्वा समाचम्य मन्त्रपूतेन वारिणा ॥ ३४ ॥

आपोहिष्ठामयाद्याभिऋग्भिस्तिसृभिरेव च ।
अभ्युक्ष्य शुद्धदेहः सन् गृहीत्वाञ्जलिना जलम् ॥ ३५ ॥
आदित्याभिमुखो भूत्वा तद्गतात्मोर्द्ध्वलोचनः ।
वेदसारं जपन् ज्योतिर्मूलभूतं परात्परम् ॥ ३६ ॥
हृत्स्थं सर्व्वस्य लोकस्य मण्डलान्तर्व्यवस्थितम् ।
चिन्तयन् परमात्मानमपस्तूर्द्ध्वं विनिःक्षिपेत् ॥ ३७ ॥
एनस्ताः प्रतिनिघ्नन्ति जगदाप्यायन्ति च ।
ततः प्रदक्षिणीकृत्य पुनराचम्य संयतः ॥ ३८ ॥
क्रमात्तारादिमन्त्राणामृष्यादीन् विन्यसेत् सुधीः ।
तत्र तु प्रणवस्यादावृषिरुक्तः प्रजापतिः ॥ ३९ ॥
छन्दस्तु देवी गायत्री परमात्मा च देवता ।
जमदग्निभरद्वाजभृगुगौतमकाश्यपाः ॥ ४० ॥
विश्वामित्रो वसिष्ठाख्य ऋषयो व्याहृतीरिताः ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ ४१ ॥
त्रिष्टुब्जगत्यौ छन्दांसि कथ्यन्ते देवता अपि ।
सप्तार्च्चिरनिलः सूर्य्यो वाक्पतिर्व्वरुणो वृषा ॥ ४२ ॥
विश्वेदेवा इति प्रोक्ताः सप्तव्याहृतिदेवताः ।
हृन्मुखांसोरुयुग्मेषु सोदरेषु क्रमान्न्यसेत् ॥ ४३ ॥
विश्वामित्रस्तु गायत्र्या ऋषिश्छन्दः स्वयं स्मृतम् ।
सविता स्याद्देवता च ब्रह्मा शिरऋषिः स्मृतः ॥ ४४ ॥
छन्दस्तु देवी गायत्री परमात्मा च देवता ।
स्थानेषु पूर्व्वमुक्तेषु सतारा व्याहृतीर्न्यसेत् ॥ ४५ ॥
गायत्रीं शिरसा विद्वान् जप्याक्षिः स्यादुपासना ।
हृदयेऽधस्तथोर्द्ध्वञ्च महादिष्वपि संयतः ॥ ४६ ॥
व्यापयेद्व्याहृतीः सम्यग्गायत्रीञ्च शिरोयुताम् ।
सार्थं संस्मृत्य संजप्यात्त्रिविधं जपलक्षणम् ॥ ४७ ॥

आत्मन्यथश्चोपरि च दिग्भ्यस्ताः समुपानयेत् ।
गायत्रीं पूर्व्ववज्जप्यात् स्वाध्यायविधिरीदृशः ॥ ४८ ॥
एतत्त्रयं त्रिशः कुर्य्यादृजुकायस्त्वनन्यधीः ।
निरुच्छ्वासः स विज्ञेयः प्राणायामो मनीषिभिः ॥ ४९ ॥
ध्यानस्य केवलस्यास्य व्याख्याने दर्शितः क्रमः ।
त्रिव्याहृत्यादिमभ्यस्येद्गायत्रीं सन्ध्ययोः सुधीः ॥ ५० ॥
शतं वाथ सहस्रं वा मन्त्रार्थगतमानसः ।
पूर्व्वं प्रपञ्चयागोक्तान् गाणपत्यजपादिकान् ॥ ५१ ॥
लिपिन्यासादिकान् साङ्गान् (१) ग्रहन्यासादिसंयुतान् ।
सनिजर्ष्यादिकान् सर्व्वान् विदध्याद्विधिवद्बुधः ॥ ५२ ॥
पादसन्धिचतुष्काभ्युनाभिहृद्गलदोर्द्वये ।
सन्ध्यास्यनासागण्डाक्षिकर्णभ्रूमस्तकेष्वपि ॥ ५३ ॥
वारुणैन्द्रवयाम्यप्रागूर्द्ध्वगेषु मुखेषु च ।
क्रमेण वर्णान् विन्यस्येद्गायत्र्या मन्त्रवित्तमः ॥ ५४ ॥
शिरोभ्रूमध्यनयनवक्त्रकण्ठेषु (२) वै क्रमात् ।
हृन्नाभिगुह्यजान्वाख्यपादेष्वपि पदान्न्यसेत् ॥ ५५ ॥
सब्रह्मविष्णुरुद्रैश्च सेश्वरैः ससदाशिवैः ।
ससर्व्वात्माह्वयैः (३) कुर्य्यादङ्गन्यासं समाहितः ॥ ५६ ॥
एवं कृत्वा तु सिद्ध्यर्थं गायत्रीं दीक्षितो जपेत् ।
अथ त्रिगुणितप्रोक्ते विचित्रे मण्डलोत्तमे ॥ ५७ ॥
शक्तिभिः प्राक् समुक्ताभिः सौरं पीठं समर्च्चयेत् ।
तत्र निःक्षिप्य कलशं यथापूर्व्वोपचारतः ॥ ५८ ॥

---

(१) "मार्गान्" इति पाठान्तरम् ।
(२) "गण्डेषु" इति पाठान्तरम् ।
(३) "ससर्व्वार्याह्वयैः" इति पाठान्तरम् ।

गव्यैर्वा पञ्चभिः क्वाथजलैर्वा पूरयेत्ततः ।
तस्मिन्नावाह्य कलशे शक्तिमित्थं विचिन्तयेत् ॥ ५८ ॥
मन्दाराह्वयरोचनाञ्जनजवाच्छाभे(१)र्मुखैरिन्दुम-
द्रत्नोद्यन्मुकुटाङ्गसन्ततचतुर्विंशार्णचित्रा तनुः ।
अब्जे चारिगदाह्वयौ गुणकपालाख्यौ च पाशाङ्कुशे-
ष्टाभीतीर्दधती भवेद्भवदभीष्टोद्भाविनी तारणी ॥ ६० ॥
संचिन्त्य भर्त्तारमिति प्रभाणां त्रिशक्तिमूर्त्तीः प्रथमं समर्च्य ।
आदित्यशक्त्याख्यचतुष्टयेन यजेद्द्वितीयावरणे दिनेशम् ॥ ६१ ॥
प्रह्लादिनी प्रभा नित्या सविश्वम्भरसंज्ञिका (२) ।
विलासिनीप्रभावत्यौ जया शान्ता (३) क्रमाद्यजेत् ॥ ६२ ॥
कान्ता दुर्गासरस्वत्यौ विद्या रूपाह्वया तथा ।
विशालेशा व्यापिनी च विमलाख्या क्रमाद्यजेत् ॥ ६३ ॥
तमोपहारिणी सूक्ष्मा विश्वयोनिर्जयावहा ।
पद्मालया परा शोभा भद्ररूपा(४) तथा यजेत् ॥ ६४ ॥
मातृभिः सारुणान्ताभिः षष्ठ्यथो सप्तमी ग्रहैः ।
आदित्यपार्श्वदन्तैरप्यष्टमीन्द्रादिभिः सुरैः ॥ ६५ ॥
आवृतिः कथितश्चेति विधानं परमीदृशम् ।
गन्धादिभिर्निवेद्यान्तैर्दिनेशं सम्यगर्चयेत् ॥ ६६ ॥
अथ पुनरमुमभिषिञ्चेत् संयतचित्तश्च देशिकः शिष्यम् ।
कृतहुतविधिमपि विधिवद्विहितवलिं दत्तदक्षिणं गुरवे ॥ ६७ ॥
भूयस्त्वक्षरलक्षं गायत्रीं संयतात्मको जप्त्वा ।
जुहुयात् पायसघृततिलदूर्व्वाभिर्दुग्धतरुसमिद्भिरपि ॥ ६८ ॥
एकैकं त्रिसहस्रं मन्त्री समभीष्टसिद्धये मुक्त्यै ।
अक्षरसहस्रसंख्यं मुख्यतरैः केवलैस्तिलैर्जुहुयात् ॥ ६९ ॥

---

(१) "जवाभाभैः" इति पाठान्तरम् । (२) "सविश्वहरसंज्ञिका" इति पाठान्तरम् । (३) "सीता" इति पाठान्तरम् । (४) "पद्मरूपा" इति पाठान्तरम् ।

दुरितोच्छेदनविधये मन्त्री दीर्घायुषे च विशदमतिः ।
आयुःकामो जुहुयात् पायसहविराज्यैः केवलाज्यैश्च ॥ ७० ॥
दूर्व्वाभिः सतिलाभिः सर्व्वैस्त्रिसहस्रसंख्यकं मन्त्री ।
अथवा त्रिमधुरसिक्तैररुणैर्जुहुयात् सरोरुहैरयुतम् ॥ ७१ ॥
नष्टश्रीरपि भूयो भवति मनोज्ञः स मन्दिरं लक्ष्म्याः ।
अन्नाद्यर्थैन्नैरपि पालाशैर्ब्रह्मवर्च्चसे जुहुयात् ।
सर्व्वैरेतैर्जुहुयात् सर्व्वफलाप्त्यै द्विजेश्वरो मतिमान् ॥ ७२ ॥

इति परमरहस्यं वेदसारस्य सारं
गदितमज सुशुद्धैर्योगिभिर्ध्यानगम्यम् (१) ।
अमुमथ जपहोमध्यानकाले य एवं
भजति स तु विमुक्तः कर्म्मभिर्मुक्तिमेति ॥ ७३ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकोनत्रिंशः पटलः ॥ * ॥

---

(१) "ज्ञानागम्यम्" इति पाठान्तरम् ।

## त्रिंशः पटलः ।



अथ वक्ष्यामि विद्यायास्त्रिष्टुभः प्रवरं विधिम् ।
ऋषिच्छन्दोदेवताभिरङ्गन्यासक्रमैः सह ॥ १ ॥
मरीचिः काश्यपो नाम ऋषिश्छन्दः स्वयं स्मृतम् ।
देवता जातवेदोऽग्निरुच्यन्तेऽङ्गान्यतो मनोः ॥ २ ॥
नवभिः सप्तभिः षड्भिः सप्तभिश्च तथाष्टभिः ।
सप्तभिर्मूलमन्त्रेण कुर्य्यादङ्गानि वर्णकैः ॥ ३ ॥
अङ्गुष्ठगुल्फजङ्घासु जानूरुकटिगुह्यके ।
सनाभिहृदयोरोजपार्श्वयुक्पृष्ठकेषु च ॥ ४ ॥
स्कन्धयोरुभयोर्मध्ये बाहुमूलोपबाहुषु ।
प्रकूर्परप्रकोष्ठेषु मणिबन्धतलेषु च ॥ ५ ॥
मुखनासाक्षिकर्णेषु मस्तमस्तिष्कमूर्द्धसु ।
विन्यसेदक्षरान्मन्त्री क्रमान्मन्त्रसमुद्भवान् ॥ ६ ॥
शिखाललाटदृक्कर्णयुगोष्ठरसनासु च ।
सकण्ठबाहुहृत्कुक्षिकटिगुह्योरुजानुषु ।
जङ्घाचरणयोर्न्यसेत् पदानि त्रिष्टुभः सुधीः ॥ ७ ॥
उद्यद्विद्युत्करालाकुलहरिगलसंस्थारिशङ्खासिखेटे-
ष्विष्वासाख्यत्रिशूलानरिगणभयदां तर्ज्जनीञ्चादधाना ।
चर्म्मास्युद्‌गूर्णदोर्भिः (१) प्रहरणनिपुणाभिर्वृता कन्यकाभिः
र्दद्यात्कार्शानवीष्टांस्त्रिनयनलसिता चापि कात्यायनी वः ॥ ८ ॥
इति विन्यस्तदेहस्तु कुर्य्याज्जप्यादिकाः क्रियाः ।
दीक्षा प्रवर्क्ष्यते पूर्व्वं यथावद्देशिकोत्तमैः ॥ ९ ॥

(१) "चर्म्माप्युद्‌गूर्णदोर्भिः" इति पाठान्तरम् ।

ततोऽस्त्रक्लृप्तिः संप्रोक्ता स्यात्प्रयोगविधिस्ततः ।
दीप्तचक्रादच्चराण्यादौ शक्त्यावेष्ट्य ततोवह्निः ॥ १० ॥
यन्त्रं षड्गुणितं कृत्वा दुर्व्वर्णलसितात्मकम् (१) ।
वह्निरष्टदलं पद्मं प्रोक्तलच्चणलच्चितम् ॥ ११ ॥
अत्र पीठं यजेन्मन्त्री क्रमात् सनवशक्तिकम् ।
जया सविजया भद्रा भद्रकाली सुदुर्मुखी ॥ १२ ॥
व्याघ्रसिंहमुखी दुर्गा त्रिष्टुभो नव शक्तयः ।
तत्राधाय घटं गव्यक्काथमूत्रपयोऽम्भसाम् ॥ १३ ॥
एकेन पूरणं कृत्वा आवाह्य च विभावसुम् ।
आवृतिर्व्वह्निरग्न्यादिपादाष्टकविनिःसृताः ॥ १४ ॥
मूर्त्तीरभ्यर्च्चयेदग्नेर्जातवेदादिकाः क्रमात् ।
पृथिव्यम्बुनलेशानप्यात्मनेपदसंयुतान् ॥ १५ ॥
अर्च्चयेद्दिच्चु कोणेषु निवृत्त्यादीर्यथाक्रमम् ।
दिच्चेकादशसंख्याः स्युर्जार्णाद्या वर्णशक्तयः ॥ १६ ॥
लोकपालांश्च तद्धेतोर्विधिनेति समर्चयेत् ।
जागता तपनी वेदगर्भा दहनरूपिणी ॥ १७ ॥
सेन्दुखण्डा शुम्भहन्त्री सनभश्चारिणी तथा ।
वागीश्वरी मदवहा सोमरूपा मनोजवा ॥ १८ ॥
मरुद्वेगा रात्रिसंज्ञा (२) तीव्रकोपा यशोवती ।
तोयात्मिका तथा नित्या दयावत्यपि हारिणी ॥ १९ ॥
तिरस्क्रिया वेदमाता तथा स्यादमरप्रिया ।
समाराध्या नन्दिनी च परा रिपुविमर्द्दिनी ॥ २० ॥
षष्ठी च दण्डिनी तिग्मा दुर्गा गायत्रिसंज्ञिका ।
निरवद्या विशालाची श्वासोद्वाहा च नादिनी ॥ २१ ॥

---

(१) "दुर्व्वर्णलसितात्मकम्" इति पाठान्तरम् ।
(२) "धात्रिसंज्ञा" इति पाठान्तरम् ।

वेदना वह्निगर्भा च सिंहवाहाह्वया तथा।
धुर्य्या दुर्व्विषहा चैव रिरंसा तापहारिणी ॥ २२ ॥
त्यक्तदोषा नि:सपत्ना चत्वारिंशच्चतुर्युता:।
अभिषिच्य पुन:शिष्यं कुम्भादीन् गुरुराहरेत् ॥ २३ ॥
ईदृशं यन्त्रमारुह्य जपेच्छिष्य: सुयन्त्रित:।
मन्त्राचरसहस्रन्तु सिद्ध्यर्थं गुरुसन्निधौ ॥ २४ ॥
सर्व्वजापेषु चाग्नेय्या गायत्र्या द्विगुणो जप:।
कर्त्तव्यो वाञ्छितावाप्त्यै रक्षायै कार्य्यसिद्धये ॥ २५ ॥
तिलराज्यऽनलचौरवृक्षैश्चहविराज्यकै:।
सर्पि:सिक्तै: क्रमाद्धोम: साधयेदीप्सितं नृणाम् ॥ २६ ॥
चत्वारि चत्वारिंशच्च चतु:शतसमन्वितम्।
चतु:सहस्रसंयुक्तं प्रोक्तैर्द्रव्यैर्हुतक्रिया ॥ २७ ॥
एवं संसिद्धमन्त्रस्य स्युरस्त्राद्या: क्रियामता:।
चत्वारि चत्वारिंशच्च वर्णानामस्त्रमिष्यते ॥ २८ ॥
प्रलोमपाठो वर्णानामस्त्रमाहुर्म्मनीषिण:।
पादाष्टकमिदं विद्यात्ततोऽष्टाङ्गो मनुस्त्वयम् ॥ २९ ॥
जप्तुकामो मनुन्त्वेनं पादांस्तु प्रतिलोमत:।
जपेत्तथाहि मन्त्रोऽयं चाल्यते दुष्टदूषित: ॥ ३० ॥
आद्या: पञ्चाक्षरा: पादास्त्रय: सप्ताक्षरा: पद:।
पञ्चमश्चाथ षष्ठश्च द्वौ तु पादौ षड़क्षरौ ॥ ३१ ॥
पञ्चाक्षरौ तदन्तौ च तेषां भावो निगद्यते।
आद्यं ज्ञानेन्द्रियं कर्म्मं द्वितीयं पाञ्चभौतिकम् ॥ ३२ ॥
तृतीयं धातव: सप्त चतुर्थं वर्णसप्तकम्।
षड़ूर्म्मय: पञ्चमं स्यात् षष्ठ: षाट्कौशिको मत:।
सप्तमश्चाष्टम: पाद: शब्दाद्यं वचनादिकम् ॥ ३३ ॥

साङ्गः सप्रतिपत्तिकः सगुरुपद्द्वन्द्वप्रणामक्रियो-
जाप्योऽग्न्यादिसदन्तकोऽन्तविगतो वर्णप्रतीपस्तथा ।
गुर्व्वादेशविधानतश्च विधिवद्धगतो मनुर्मन्त्रिणा
तत्तत्कार्य्यसमाप्तयेऽखिलविपद्ध्वान्तौघभानूदयः ॥ ३४ ॥
अनुलोमजपोऽङ्गानामपि पाठोऽनुलोमकः ।
प्रतिलोमानि तानि स्युः प्रतिलोमविधौ तथा ॥ ३५ ॥
अन्तपादप्रतीपे हि तथा तानि भवन्ति हि ।
वर्णप्रतीपे हि तथा मात्रा च प्रतिलोमके ॥ ३६ ॥
प्रतिपत्तिविशेषांश्च तत्र तत्र विचक्षणः ।
गुर्व्वादेशविधानेन प्रविदध्यान्नचान्यथा ॥ ३७ ॥
जपः पुरोक्तसंख्यः स्याद्धुतक्लृप्तिस्तथा भवेत् ।
क्षीरवृक्षसमिद्राजीतिलद्रव्यघृतैः क्रमात् ॥ ३८ ॥
अथवा पञ्चगव्योत्थचरुणा हुतमुच्यते ।
प्रत्यङ्मुखेन कर्त्तव्यं प्रायोजपहुतादिकम् ॥ ३९ ॥
तत्र स्युर्मन्त्रवर्णेभ्यस्तावत्यो वह्निदेवताः ।
प्रत्येकमावृतास्तास्तु पञ्चकेन नतभ्रुवाम् ॥ ४० ॥
तत् पञ्चकञ्च प्रत्येकमावृतं पञ्चभिः पृथक् ।
प्रत्येकं पञ्चकानाञ्च षोड़शावृत्तिरिष्यते ।
प्रत्येकं षोड़शानाञ्च कोटयः परिचारिकाः ॥ ४१ ॥
इत्येकाक्षरजात् पूर्व्वादिकस्मात् षोड़शात्मकात् ।
एतावत्यस्तु जातास्तद्विस्तारं पुनरूहयेत् ॥ ४२ ॥
तत्र त्विन्द्रियजाः प्रोक्ता देवतास्तूर्द्ध्वदृष्टयः (१) ।
तिर्य्यञ्चो भौतिकाः प्रोक्ता धातूत्थास्तूभयानना ॥ ४३ ॥
ऊर्म्मिजास्तूर्द्ध्ववदनास्तिर्य्यञ्चश्चाथ कोशजाः ।
क्लीवा मुखद्वयोपेता गोचरोत्थाः स्त्रियो मताः ॥ ४४ ॥

---

(१) "देवतास्त्वर्द्धदृष्टयः" इति पाठान्तरम् ।

अधोमुखाश्च तिर्य्यश्च इत्युक्तो मूर्त्तिसंग्रहः ।
आभिः सर्व्वाभिरपि च शिखाभिर्जातवेदसः ॥ ४५ ॥
व्याप्यते परराष्ट्रेषु वृक्षगुल्मलतादिकम् ।
आरम्भे मानुषाणि स्युर्नक्षत्राण्याभिचारिके ।
कर्म्मण्यासुरभानि स्युर्द्दैवानि स्युस्तथा हुतौ ॥ ४६ ॥
अन्त्याश्चीन्द्वर्कादितिगुरुहरिमित्रानिलाह्वया दैवाः ।
पूर्व्वोत्तरत्रयीयमहरविधयो मानुषाः परेऽसुरभाः ॥ ४७ ॥
नन्दास्वारभ्य रिक्तासु प्रयोज्यात्मनि संहरेत् ।
भद्रासु संग्रहं कुर्य्याज्जयासु तु विशेषतः ॥ ४८ ॥
आरेणारभ्य मन्देन प्रयोज्यादित्यवारके ।
संहरेत् संग्रहं कुर्य्याद्वारे त्वाचार्य्ययोः सुधीः ॥ ४९ ॥
चरैर्व्विसृज्योभयकैराहरेदभ्यसेत् स्थिरैः ।
दिनास्त्रं दिनकृद्युक्तं चारग्रहसमन्वितम् ॥ ५० ॥
कृत्तिकादि च कृत्यान्तं कृत्यास्त्रं जातवेदसः ।
नक्षत्रात्मा हुताशः स्यात्तिथ्यात्मेन्दुरुदाहृतः ॥ ५१ ॥
ताभ्यां करोति दिनकृद्विसर्गादानकर्म्मणी ।
इत्येष निपुणो मन्त्री प्रयोगादन्यथात्महा ॥ ५२ ॥
रक्षानिग्रहकर्म्मणोरनुपराग्वक्त्राप्रधानाकृति
प्रख्या मन्त्रविधानविच्च दिशि दिश्येकादशैकादश ।
संस्थाप्य क्रमशोऽक्षरोदितरुचीः शक्तीर्जपेद्वा मनुं
सम्यग्वा जुहुयादनु प्रतिगतीसिद्धैर समाराधयेत् ॥ ५३ ॥
पीताऽयोमुष्टिगदाहस्ता महिषाज्यसंयुतपुलाकैः ।
वैभीतकारिष्टसमिल्लोद्रवकैः स्तम्भयेच्च हुतविधिना ॥ ५४ ॥
सुसिता पाशाङ्कुशयुग्विगलद्वारिप्रवाहसम्भिन्ना ।
वैतससमिदाहुत्या मधुरयुजा मङ्क्षु वशयेद्दुर्गा ॥ ५५ ॥

रक्ता पाशाङ्कुशिनी निशि फलिनीकेसरोद्भवैः पुष्पैः ।
चन्दनरससंसिक्तैर्होमाद्दुर्गा वशीकरोति जगत् ॥ ५६ ॥
लवणैस्त्रिमधुरसिक्तैस्तत्कृतया वा जुहोतु पुत्तल्या ।
उडुतरुकाष्ठैर्नक्तं सप्ताहान्नृपतिमपि वशे कुरुते ॥ ५७ ॥
सकपालशूलपाशाङ्कुशहस्ताऽरुणतरा तथा दुर्गा ।
आकर्षयेच्च लावणपुत्तल्या त्रिमधुराक्तया होमात् ॥ ५८ ॥
ध्यात्वा धूम्रां मुसलत्रिशिखकरामस्थिभिश्च तीक्ष्णाक्तैः ।
कार्पासानां निम्बच्छदमेषघृतै(१)र्हुताच्च विद्वेषः ॥ ५९ ॥
धूम्रा तर्ज्जनिशूलाह्वितहस्ता विषदलैः समाहिषाज्यैः ।
होमाच्च मरिचसर्षपचरुभिरजारुधिरसेचितैरटयेत् ॥ ६० ॥
शिखिशूलकराग्निनिभा सर्षपतैलाक्तमत्तबीजैश्च ।
मरिचैर्वा राजियुतैर्होमादहितान् विमोहयेद्दुर्गा ॥ ६१ ॥
कृष्णा शूलासिकरा रिपुदिनवृक्षोद्भवैः समित्प्रवरैः
व्रणकृद्घृतसंसिक्तैर्होमान्मारयति मासतो दुर्गा ॥ ६२ ॥
नक्षत्रवृक्षसमिधो मरिचानि च तीक्ष्णाहिङ्गुशकलानि ।
मारणकर्म्मणि विहितान्यारुष्करस्नेहसिक्तानि ॥ ६३ ॥
नक्षत्रवृक्षसमिधां विलिखितसाध्याभिधानकर्म्मवताम् ।
सचतुश्चत्वारिंशत्तत्त्वयुजां होमकर्म्म मारणकरम् ॥ ६४ ॥
मरिचं क्षौद्रसमेतं प्रत्यक्पुष्पीपरागसम्भिन्नम् ।
उष्णाम्भःपरिलुलितं प्रसेचयेद्दृक्षवृक्षपुत्तल्या ॥ ६५ ॥
हृदये वदने च रिपोः सम्मुखतः संप्रतिष्ठिते वायोः ।
जूर्त्यभिभूतोऽरिः स्यात्तत्क्वथनात् पञ्चमात्रकान्म्रियते ॥ ६६ ॥
सैव प्रतिकृतिरसकृत्तत्प्रतिष्ठितसमीरणा च विशदधिया ।
तीक्ष्णस्नेहालिप्ता विलोमजापेन तापनीयाग्नौ ॥ ६७ ॥

---

(१) "निम्बच्छेदमेषघृतैः" इति पाठान्तरम् ।

विधिना ज्वरविद्धः स्यादपघनहोमेन हानिरङ्गस्य ।
सर्व्वाहुत्या मरणं प्राप्नोति रिपुर्न तत्र सन्देहः ॥ ६८ ॥
प्राक्प्रोक्तान् भूतवर्णान् दशदशयुगशो विन्दुयुक्तानमोऽन्तान्
योनेर्मध्यास्त्रिमध्येष्वपि पुनरथ संस्थाप्य भूताभवर्णान् ।
वर्णैस्तैः साकमग्नेर्मनुमपि कुलिशाद्यैः स्वचिह्नैः समेतं
कुर्य्यात् कर्म्माणि सम्यक् पटुविशदमतिः स्तम्भनाद्यानि मन्त्री ॥ ६९ ॥
उदन्ताद्दिलला: कोर्णासौ चतुर्थार्णकावसौ धाराम् ।
हस्यौ द्वितीयरचा वह्नेरद्वन्द्वयोनिकादियसाः ॥ ७० ॥
मरुतः कपोलविन्दुकपञ्चमवर्णाः शहौ तथा व्योम्नः ।
सनुपु परेष्वपि मन्त्री करोतु कर्म्माणि तस्य संसिद्ध्यै ॥ ७१ ॥
उन्मत्तच्छेलनैत्रद्रुमभवसमिधां सप्तसाहस्रकान्तं
प्रत्येकं राजितैलालुलितमथ हुनेन्माहिषाज्याप्लुतं वा ।
कृष्णाष्टम्याद्यमेवं सुनियतचरितः सप्तरात्रं निशायां
निःसन्देहोऽस्य शत्रुस्त्यजति किल निजं देहमाविष्टमोहः ॥ ७२ ॥
सामुद्रे च सहिंगुजीरकविषैः साध्यर्क्षवृक्षाकृतिं
कृत्वाधोवदनां जले घटकटाहादिस्थिते क्वाथयेत् ।
सप्ताहं ज्वलनं जपन् विषतरोर्यष्ट्या शिरस्ताड़नं
कुर्व्वन् सप्तदिनान्तरे यमपुरक्रीड़ापरः स्यादरिः ॥ ७३ ॥
अर्कस्यन्दनबद्धपन्नगमुखग्रस्ताङ्घ्रिमाशाम्बरं
न्यग्वक्त्रं तिलजाप्लुतं विषहतं दीप्तं करैर्भास्वतः ।
वायुप्रेरितवह्निमण्डलमहाज्वालाकुलास्यादिकं
ध्यायन् वैरिणमुत्क्षिपेत् जलममुं मन्त्रं जपन् मृत्यवे ॥ ७४ ॥
आर्द्रांशुकोऽग्निमनुना त्वथ सप्तरात्रं
सिद्धार्थतैललुलितैर्मरिचैर्जुहोतु ।
आरभ्य विष्टिदिवसेऽरिनरः प्रलाप-
मूर्च्छान्वितेन विषयोम्रियते ज्वरेण ॥ ७५ ॥

तालस्य पत्रे भुजपत्रके वा मध्ये लिखेत् साध्यनराभिधानम् ।
अथाभितो मन्त्रमिमं विलोमं विलिख्य भूमौ विनिखन्य तत्र ॥ ७६ ॥
आधाय वैश्वानरमादरेण समर्च्य सम्यङ्मरिचैर्जुहोतु ।
तीव्रो ज्वरस्तस्य भवेत् पुनस्तत्तोये क्षिपेद्वश्यतमः स भूयात् ॥ ७७ ॥
सिंहस्थां शरनिकरैः कृशानुवक्त्रैर्धावन्तीं रिपुमनुधावमानमेनाम् ।
संचिन्त्य क्षिपतु जलं दिनेशबिम्बे जप्त्वामुं मनुमपि चाटनाय शीघ्रम् ॥७८॥
कृत्वा स्थण्डिलमण्डले भगवतीं न्यासक्रमादर्चयेद्
गन्धाद्यैः पुनरन्धसा च विकिरेन्मन्त्री निशायां वलिम् ।
जप्त्वा मन्त्रममुञ्च रोगसहिताः कृत्वा निकृत्या कृता-
स्तांस्तान् भूतपिशाचवैरिविहितान् दुःखानसौ नाशयेत् ॥ ७९ ॥
विधिवदभिज्वाल्यानलमन्वहमाराध्य गन्धपुष्पाद्यैः ।
सन्ध्यासु जपाच्च मनुरयमाकाङ्क्षितसर्व्वसिद्धिकल्पतरुः ॥ ८० ॥
कुसुमरसलुलितलोणैर्व्वारुणवदनो जुहोतु सन्ध्यासु ।
मन्त्रार्णसंख्यमग्नेरैक्येन द्रावयेदरीनचिरात् ॥ ८१ ॥
शुद्धैश्च तण्डुलैरथ हविरपि निष्पाद्य पञ्चगव्यमपि ।
सघृतेन तेन जुहुयादष्टसहस्रं समेतसम्पातम् ॥ ८२ ॥
प्राशितसम्पातस्य स्याद्रक्षा सर्व्वथैव साध्यस्य ।
प्राङ्गणमन्दिरयोरपि निखनेत् द्वारेऽवशिष्टसम्पातम् ॥ ८३ ॥
कृत्या नश्यति तस्य वीक्षितेन ग्रहादयो भीत्या ।
कर्त्तारमेति कुपिता कृत्या सर्व्वात्मना च नाशयति ॥ ८४ ॥
ब्रह्मद्रुमफलकान्ते मन्त्रितमः सप्तसप्तकोष्ठयुते ।
कोणोदराणि हित्वा मायाबीजं सकामं मध्यगते ॥ ८५ ॥
विलिखेत् क्रमेण मन्त्राक्षरांश्च शिष्टेषु तेषु कोष्ठेषु ।
तत्र मरुतः प्रतिष्ठां विधाय निधाय वह्निमपि जुहुयात् ॥ ८६ ॥
आज्येनाष्टसहस्रं फलकोपरि सम्यगात्तसम्पातम् ।
विप्रतिपत्तिधरायां निखनेन्नश्यन्त्युपद्रवाः सद्यः ॥ ८७ ॥

सिकताचरुगव्यात्मकमृदां प्रतिष्ठा विधीयते सिद्धैः ।
प्रस्थाढ़कघटमाना गृहपुरराष्ट्राभिगुप्तये सिकताः ॥ ८८ ॥
मध्येऽष्टाशान्तासु च कुण्डानामारचय्य नवकमपि ।
विधिना निवपेत् क्रमशः सिंहधनुर्म्मीनगयायिनि दिनेशे ॥ ८९ ॥
तिथिषु च (१) कालाष्टम्यां भेषु विशाखाग्निमूलभाग्येषु ।
वारेषु मन्दवाक्पतिवर्ज्याः सर्व्वे प्रशस्यन्ते तथा ॥ ९० ॥
हस्तश्रवणमघासु प्राजापत्ये च कर्म्म कुर्व्वीत ।
द्वादशसहस्रसंख्यं प्रजपेद्गायत्रमपि यथोक्तम् ॥ ९१ ॥
मध्ये च मूलमनुना तदायुधैरष्टदिक्षु चक्राद्यैः ।
सकपालान्तैः पृथगपि संस्थापनकर्म्म निगदितं विधिवत् ॥ ९२ ॥
तास्ताश्च देवता अपि परिपूज्य यथाक्रमेण मन्त्रितमः ।
कुर्य्याद्बलिं दिनग्रहकरणिभ्यो लोकपालराशिभ्यः ॥ ९३ ॥
सिकताषोड़शकुड़वं ब्रह्मद्रुमभाजनेऽन्नगव्यात्तम् ।
निर्वपति यदि विधिना तं देशं ग्रामं करोति चतुरब्दात् ॥ ९४ ॥
अर्केऽजस्थेऽब्धिगायामपरिमितजलायां समादाय शुद्धाः
सम्यक् संशोषयित्वातपमनु सिकताः शूर्पकोणैर्व्विशोध्य ।
संशुद्धे पञ्चगव्ये सुमतिरथ विनिःक्षिप्य ताः कुम्भसंस्था
मन्त्राग्नौ मन्त्रजापी द्विजतरुसमिधा भर्ज्जयेत् कार्य्यहेतोः ॥ ९५ ॥
एवं मृदुपलयोरधः संस्थाप्यन्ते सपञ्चगव्यास्ताः (२)।
वसुधाविप्रतिपत्तिक्षयश्च पुष्टिञ्च कुर्व्वते क्रमशः ॥ ९६ ॥
रथचरणदरगदाम्बुजहस्ता निष्टप्तशातकुम्भनिभा ।
सघृतपयोऽन्धोहोमान्महतीं लक्ष्मीं समावहेद्दुर्गा ॥ ९७ ॥
व्रीहिभिरन्नैः क्षीरैः समिद्भिरपि दुग्धवीरुधामाज्यैः ।
मधुरत्रयमधुरैर्म्महतीमृद्धिं करोति हुतविधिना ॥ ९८ ॥

---

(१) "रात्रिषु त" इति पाठान्तरम् ।

(२) "एवं मृदुपलचरवः संस्थाप्यन्ते सपञ्चगव्यास्ते" इत्यपि पाठान्तरं दृश्यते ।

यद्‌यद्वाञ्छति पुरुषस्तत्तदमुष्य प्रभावतः साध्यम् ।
सग्रहनचत्राढ्यां सगिरिपुरग्रामकाननां वसुधाम् ॥ ९९ ॥
साद्रिझषोपलमुदधिं दहति हि मतिमानयत्नमेतेन ।
एवं प्रोत्थापयति च मन्त्रेणानेन निश्चितधीर्मन्त्री ।
पुंसा केन कियद्वा मन्त्रस्याख्यायतेऽस्य सामर्थ्यम् ॥ १०० ॥

तस्मादेनं मनुवरमभीष्टाप्तये संयतात्मा
जप्यान्नित्यं सहुतविधिमप्यादरादर्चयीत ।
भक्त्या कुर्य्यात् सुमतिरभिषेकादिकं कर्म्मजातं
कर्त्तुं वान्यत् प्रवणमतिरत्रैव भक्तः सदा स्यात् ॥ १०१ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे त्रिंशः पटलः ॥ * ॥

---

# एकत्रिंशः पटलः ।

अथाभिवक्ष्ये महितस्य मन्त्रस्यानुष्टुभः संग्रहतो विधानम् ।
ऋष्यादिकैरङ्गपदैर्यथावद्दीक्षाजपार्चाहवनक्रमेण ॥ १ ॥
ऋषिरभिहितो वसिष्ठश्छन्दोऽनुष्टुप् च देवता रुद्रः ।
त्र्यम्बकपदादिकः स्यान्मनुनामुनैव षडङ्गक्लृप्तिरिह कथिता ॥ २ ॥
त्रिभिस्तु वर्णैर्हृदयं शिरश्च चतुर्भिरष्टाभिरथो शिखा च ।
उक्तं नवार्णैः कवचं तथाक्षि पञ्चार्णकं त्र्यम्बकमस्त्रमाहुः ॥ ३ ॥
चरणाग्रसन्धिगुह्याधारोदरहृदयकन्धरेषु पुनः ।
बाह्वोः सन्ध्यग्रास्यघ्राणदृक्श्रुतिभ्रूशीर्षेषु ॥ ४ ॥
वर्णान् न्यस्य शिरोभ्रूदृग्वक्त्रगलहृदुदरगुह्येषु ।
ऊर्वोर्जान्वोः पदयोः पदैश्च मनुवित् क्रमेण विन्यस्येत् ॥ ५ ॥
अच्छः स्वच्छारविन्दस्थितिरुभयकराङ्कस्थितं पूर्णकुम्भं
द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ ।
द्वाभ्यां तौ च स्रवन्तौ शिरसि शशिकलावम्बुरे प्लावयन्तौ
देहं देवो दधानः प्रदिशतु विशदाकल्पजातः श्रियं वः ॥ ६ ॥
प्रासादोक्ते च पीठे गव्यैर्वा दुग्धतरुकषायैर्वा ।
संपूर्य कलशमस्मिन् महेशमावाह्य पूजयेद्भक्त्या ॥ ७ ॥
अङ्गैराद्यार्काद्यैः पुनराहृतिरष्टभिर्द्वितीया स्यात् ।
मन्त्रार्णशक्तिभिः स्युः पुनश्चतस्रो दिशापवज्राद्यैः ॥ ८ ॥
अर्केन्दुधरणितोयानलेरवियदात्मसंज्ञकास्ते च ।
आनुष्टुभमित्यष्टावरणं प्रोक्तं विधानवरमेवम् ॥ ९ ॥
रमा राका प्रभा ज्योत्स्ना पूर्णोषा (१) पूरणी सुधा ।
विश्वा विद्या सिता प्रह्वा सारा सत्या (२) शिवा निशा ॥ १० ॥

---

(१) "ज्योत्स्नाऽपर्णोषा" इति पाठान्तरम् । (२) "सन्ध्या" इति पाठान्तरम् ।

आर्द्रा प्रज्ञा परा मेधा कीर्त्तिः (१) शान्तिर्धृतिर्म्मतिः ।
धरोमा पावनी पद्मा शान्ताऽमोघा जयाऽमला ॥ ११ ॥
द्वात्रिंशदिति निर्द्दिष्टाः शक्तयोऽनुष्टुभः क्रमात् ।
शिवानुभावतो नित्यं जगदाप्याययन्ति याः ॥ १२ ॥
इति परिपूज्य महेशं कलशजलैः समभिषेचयेच्छिष्यम् ।
कनकांशुकरत्नाद्यैर्गुरुमपि परिपूज्य मनुमतः सिद्धैर (२) ॥ १३ ॥
प्रजपेल्लचावृत्त्या द्रव्यैर्जुहुयाज्जपावसाने च ।
विल्वपलाशौ खदिरवटसिद्धार्थदौग्धदुग्धानि ॥ १४ ॥
दधि दूर्व्वेति दशैतान्याज्यसमेतानि होमवस्तूनि ।
एकैकशः सहस्रं दशभिर्हुत्वा प्रतर्प्य विप्रांश्च ।
भवति नरः सिद्धमनुर्म्मन्त्रेण च सर्व्वकर्म्मकर्त्ता स्यात् ॥ १५ ॥
विल्वैरयुतं हुत्वा महतीं लक्ष्मीमवाप्नुयाद्विप्रः ।
तावद्भिर्द्विजवृक्षैर्द्विजः श्रियं पुष्कलामवाप्नोति ॥ १६ ॥
खदिरसमिदयुतहोमात्तेजोबलपुष्टिमाप्नुयादिष्टाम् ।
न्यग्रोधायुतहोमाद्धनधान्यसमृद्धिमेति न चिरेण ॥ १७ ॥
अयुतं तिलैः प्रजुह्वन्नपमृत्योः पाप्मनो विमुक्तः स्यात् ।
सिद्धार्थायुतहोमैर्वैरिणमपमृत्युमपि विनाशयति ॥ १८ ॥
पायसहुतेन परमां रमामथायुर्यशो लभेन्मर्त्त्यः ।
दुग्धहुताच्छान्तिः स्यात् परकृत्या नश्यति श्रियं लभते ॥ १९ ॥
दधिहोमतोऽन्नवान् स्यात् संवलनकरं च तद्वदन्ति बुधाः ।
दूर्व्वायुतेन जुह्वन् रोगान्निर्व्वास्य सर्व्वमपमृत्युम् ।
गर्व्वितधीरव्दानां विप्रवरः सर्व्वथा शतं जीवेत् ॥ २० ॥

(१) "कान्तिः" इति पाठान्तरम् ।
(२) "सिद्धम्" इति पाठान्तरम् ।

निजजन्मदिने पयोऽन्धसा वा शतवीर्य्यात्रितयैः पयोघृताक्तैः ।
जुहुयाच्च शतं च विंशतिं यः स लभेदायुररोगितां चिराय ॥ २१ ॥

काश्मर्य्यदारुसमिधां त्रिशतं समेत-
सर्पिः पयोऽन्नसहितं त्रिदिनं जुहोतु ।
विप्रान् प्रतर्प्य च गुरून् परिपूज्य सम्य-
ग्दीर्घं विमुक्तगदमायुरवाप्नुकामः ॥ २२ ॥

स्नात्वा चार्कमुखोऽम्भसि स्थित इमं मन्त्रं सहस्रं जपे-
दायुष्यं प्रतिपर्व्व दुग्धहविषा होमो महाश्रीप्रदः ।
लाजाभिर्निजवाञ्छिताय हवनात् कन्याशु संदीयते
स्वादक्तस्तनजद्रुहोमविधिना वर्णान् वशे स्थापयेत् ॥ २३ ॥

गायत्रिवर्णपरिपूर्णतनुश्च भानु-
स्त्रिष्टुब्विशिष्टमहिमा महितः कृशानुः ।
आनुष्टुभाक्षरसमग्ररुचिः शशाङ्को
दद्युः समुद्यतममी परिवाञ्छितं वः ॥ २४ ॥

एभिस्त्रिभिर्म्मनुवरैस्तु शताक्षराख्यो
मन्त्रोऽभिकाङ्क्षितफलाप्तिदकामधेनुः ।
प्रोक्तो हिताय जगतां मुनिभिः कृपार्द्र-
चित्तैर्यथोक्तमथ संग्रहतो वदामि ॥ २५ ॥

हृद्याद्याः पूर्व्वोक्तास्त्रिविधाः स्युर्द्वत्रयोदशभिर्व्वर्णैः ।
शिर एकादशभिश्च द्वाविंशद्भिस्तथा शिखा कवचम् ॥ २६ ॥
नयनं पञ्चदशार्णैः ससप्तभिर्द्दशभिरस्त्रमङ्गविधिः ।
विन्यासश्च मनूनां मन्त्रज्ञः पूर्व्ववत् क्रमात् कुर्य्यात् ॥ २७ ॥

स्मर्त्तव्याखिललोकवर्त्ति सततं यज्जङ्गमं स्थावरं
व्याप्तं येन च यत्प्रपञ्चविहितं मुक्तिश्च यत्सिद्धितः ।
यद्वा स्यात् प्रणवत्रिभेदगहनं श्रुत्या च यद्गीयते
तद्वः काङ्क्षितसिद्धयेऽस्तु परमं ज्योतिस्त्रयोत्थं महः ॥ २८ ॥

लक्ष्मायतो जपविधिः शताक्षरस्याथ होमविधिरुक्तः ।
अयुतावधिको द्रव्यं दौग्धान्नं सर्पिषा समायुक्तम् ॥ २९ ॥
सौरे पीठे पूजाप्रोक्तैरङ्गैः समावृतिः प्रथमा ।
प्रह्लादिन्याद्याभिस्तिस्रः प्रोक्ताः क्रमात् समावृतयः ॥ ३० ॥
पञ्चम्यावृतिरुक्ता त्रैष्टुभ इव जागतादिभिस्तदनु ।
स्याच्च रमादिभिरावृतिचतुष्कमुक्तं दशम्यथेन्द्राद्यैः ॥ ३१ ॥
इति शताक्षरमन्त्रसमर्चना निगदितेह दशावरणायुधैः ।
प्रभजतामभिकाङ्क्षितसिद्धये निखिलसंसृतिमोक्षपदाप्तये ॥ ३२ ॥
दुग्धाक्तैर्जुहुयात् सहस्रममृताकाण्डैस्तु दीर्घायुषि
दूर्वाणां त्रितयैस्तथा घृतपयःसिक्तैर्घृतेनैव वा ।
लक्ष्म्यै कोकनदैश्च शोणरुचिभिस्त्रिस्वादुयुक्तैस्तथा
रक्तैरुत्पलकैस्तदङ्घ्रि विकचैर्बैल्वैः प्रसूनैरपि ॥ ३३ ॥
अनुदिनमथ शान्त्यै (१) संयतात्मा सहस्रं
प्रतिजुहुतु तिलैर्वा मन्त्रविन्यासमेकम् ।
अपि दिनकरसंख्यान् भोजयीत द्विजातीन्
विविधरसविशिष्टैर्भक्तितो भोज्यजातैः ॥ ३४ ॥
शतं शतं प्रातरतन्द्रितोद्यतो जपेद्द्विजो मन्त्रममुं शताक्षरम् ।
आरोग्यजुष्टं बहुलेन्दिरायुतं शतं प्रजीवेच्छरदां सुखेन सः ॥ ३५ ॥
प्रणवव्याहृताद्या व्याहृतितारान्तिका च मन्त्रिवरैः ।
जप्या शताक्षरी स्यादिह परलोकप्रसिद्धये दिनशः ॥ ३६ ॥
मनुममुमथ शान्त्यै तत्पदाद्यं प्रजप्याद्-
गदगणरहितायाप्यायुषेऽनुष्टुवाद्यम् ।
विमलमतिररातिध्वंसने त्रिष्टुवाद्यं
दिनमनु दिनवक्त्रे वत्सरं संयतात्मा ॥ ३७ ॥

---

(१) "अनुदिनमथशान्त्यै" इति पाठान्तरम् ।

शताच्चरमनोरयं क्रम उदीरितः संग्रहा-
ज्ञजेदमुमतन्द्रितो दिनश एव मन्त्री रहः ।
अभीष्टफलसिद्धये सुयशसे च दीर्घायुषे-
ऽप्यशेषजनरञ्जनाय चिरमिन्दिरावाप्तये ॥ ३८ ॥
संवादसूक्तविहितं विधानमथ साङ्गदेवतारूपम् ।
वक्ष्यामि साधकानामनुदिनमभिवाञ्छितप्रदानकरम् ॥ ३९ ॥
ऋषिरपि संवननोऽस्यानुष्टुप् सत्रिष्टुबुच्यते छन्दः ।
संवादाद्यः प्रोक्तः संज्ञानाद्यश्च देवता चाग्निः ॥ ४० ॥
ब्रह्माख्यो हृदयमनुः शिरश्च विष्णूरुद्रः स्यादिह तु शिखेश्वरश्च वर्म्म ।
नेत्रत्वे भवति सदाशिवस्तथास्त्रं सर्व्वात्मेत्यथ कथितं षडङ्गमेवम् ॥ ४१ ॥
धवलनलिनराजच्चन्द्रमध्ये निषण्णं
करविलसितपाशं साङ्कुशं साभयञ्च ।
सवरदममलेन्दुक्षीरगौरं त्रिनेत्रं
प्रणमत सुरवक्त्रं मङ्क्षु संवादयन्तम् ॥ ४२ ॥
सहस्रकाणां दशकैश्चतुर्भिरथो सहस्रैश्च चतुर्भिरन्वितम् ।
जपेन्मनुं सम्यगथाभिदीक्षितः पयोऽन्धसाऽन्ते जुहुयाद्दशांशकम् ॥ ४३ ॥
यजेत् पुराङ्गैश्च तदर्चनाविधौ पुनर्द्वितीयावरणेऽग्निमूर्त्तिभिः ।
अनन्तरञ्च त्रिदशेश्वरादिभिः क्रमेण वह्निं विधिनेति पूजयेत् ॥ ४४ ॥
संवादसूक्ते विधिनेत्यनेन संसाधिते कर्म्म करोतु मन्त्री ।
चतुःशतञ्चापि दशोत्तरेण चतुश्चतुष्कं प्रजपेद्दिनेच ॥ ४५ ॥
पायसेन मधुरत्रयभाजा विप्रराजतरुजैः कुसुमैर्व्वा ।
सर्पिषा स्तमजवृत्तसमिद्भिर्व्वाञ्छितार्थविधये प्रजुहोतु ॥ ४६ ॥
जुहुयात् कलाचतुष्कैः प्रत्यृचमायोज्य कादिवर्गचतुष्कैः ।
तद्वच्च पयशलाद्यैर्व्वर्णैः संयोज्य पूर्व्वसंख्यकं मतिमान् ॥ ४७ ॥
तद्वदृचं प्रतियोज्य त्रिष्टुप्पादांश्च पूर्व्वसंख्येन ।
जुहुयात् सर्पिःसिक्तं पायसमचिरेण कार्य्यसमवाप्त्ये ॥ ४८ ॥

प्रतिपादमथार्कपादं प्रतियोज्य जुहोतु पूर्व्ववन्मतिमान् ।
तेनाभीष्टावाप्तिर्नचिरेण नरस्य हस्तगता ॥ ४९ ॥
अचरपादत्रिष्टुब्युक्तैः सूक्तैस्तु पूर्व्वसंख्येन ।
जुहुयात् समाजरूपं संवादयितुं प्रतर्पयेद्वाद्भिः ॥ ५० ॥

उद्दिश्य यद्यदिह मन्त्रितमो जुहोति
सूक्तैरमीभिरुदितैस्त्रिविधैश्च मन्त्रैः ।
व्यस्तैर्यथाविभवतो विधिवत् समस्तै-
स्तत्तस्य सिध्यति समग्रमयत्नमेव ॥ ५१ ॥

रुग्वारुणी ध्रुवाख्याद्या या सा त्रिष्टुब्निगद्यते ।
ऋषिर्व्वसिष्ठस्त्रिष्टुप् च छन्दो वारीट् च देवता ॥ ५२ ॥
अष्टभिः सप्तभिः षड्भिः पुनस्तावद्भिरचरैः ।
षडङ्गानि विधेयानि तन्मन्त्रसमुदीरितैः ॥ ५३ ॥
अङ्गुल्यग्रससन्धिपायुशिवसंज्ञाधारनाभिष्वथो
कुक्षौ पृष्ठहृदोरुरोजगलदोःसन्ध्यग्रवक्त्रेषु च ।
गण्डघ्राणविलोचनश्रवणयुग्भ्रूमध्यमस्तेषु के
सर्व्वाङ्गेषु तथा न्यसेद्विशदधीर्व्वर्णैर्मनूत्थैः क्रमात् ॥ ५४ ॥

अच्छांशुकाभरणमाल्यविलेपनाढ्यः
पाशाङ्कुशाभयवरोद्यतदोःसरोजः ।
स्वच्छारविन्दवसतिः सुसितः प्रसन्नो
भूयाद्विभूतिविधये वरुणश्चिरं वः ॥ ५५ ॥

अङ्गैरष्टभिरह्रिभिर्द्दिशाधिपैः समभिपूज्य वारीशम् ।
कलशजलैः पुनरभिषिञ्चेत् परमगुरुर्म्मन्त्रजापिनं शिष्यम् ॥ ५६ ॥
वसुभिः प्रसाद्य देशिकमथ शिष्यो मनुमिमं जपेल्लचम् ।
जुहुयाच्च दुग्धपक्वैरन्नैरयुतं घृताप्लुतैर्मतिमान् ॥ ५७ ॥
ऋगियमृणमोचनी स्याज्जपैर्हुतैस्तर्पणैश्च मन्त्रविदः ।
संप्राप्तदुर्गतेरपि सद्यो हृद्याच्च संवहेल्लक्ष्मीम् ॥ ५८ ॥

इक्षोः सितस्य शकलैर्घृतसिक्तैर्यश्चतुर्दिनं जुहुयात् ।
सकलोपद्रवशान्त्यै तथर्णमुक्त्यै च सम्पदे सुचिरम् ॥ ५९ ॥
वेतससमिदयुतहुताद्दृष्टिमकालेऽपि वितनुते वरुणः ।
गव्यक्षीरसमेतात्त्रिदिनकृताद्दिनमुखेषु मुदितमनाः ॥ ६० ॥
शतभिषजि समुदितेऽर्के चतुःशतं पायसं हुनेत् सघृतम् ।
ऋणमोचनाय लक्ष्मैर जनसंवननाय (१) शुक्रवारे च ॥ ६१ ॥
पाशनिबद्धं वैरिणमङ्कुशसंप्रोतमम्बुधेः पारे ।
ध्यायन् परे क्षिपन्तं वरुणं जुहुयाच्च तथा प्रजपेत् ॥ ६२ ॥
पाशनिबद्धं वैरिणमसिनाच्छिद्याशु नाशयन्तममुम् ।
ध्यायन् वेतससमिधो गोमूत्रयुता हुनेत्तदपहृत्यै ॥ ६३ ॥
दौग्धाब्जैर्भृगुवारे घृतसंसिक्तैः कृतश्च हवनविधिः ।
ऋणमोक्षदश्च विविधोपद्रवशमनकृद्रमाकरः प्रोक्तः ॥ ६४ ॥
पश्चिमसन्ध्यासमये पश्चिमवदनोऽनलं ससाराध्य (२) ।
ऋचमेनामभिजप्याच्चतुःशतं सकलदुःखशमनाय ॥ ६५ ॥
शालीर्घृतसंसिक्ताः सरिदन्तरितो जुहोतु परसेनाम् ।
संस्तम्भयितुं त्रिदिनं सुमना मन्त्री चतुःशतावृत्त्या ॥ ६६ ॥
प्रत्यङ्मुखोऽथ मन्त्री प्रतर्पयेद्वा जलैः सुशुद्धतरैः ।
यः स ह्युपद्रवाणां रुन्ध्यान्निचयं श्रियं समृच्छति च ॥ ६७ ॥
बहुना किमनेन मन्त्रिमुख्यो मनुनाशु प्रसाधयेदभीष्टम् ।
हवनक्रिययाऽथ तर्पणैर्वा संजपैः पाशभृतो महामहिम्नः ॥ ६८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकत्रिंशः पटलः ॥ * ॥

---

(१) "वदनाय" इति पाठान्तरम् ।        (२) "समाधाय" इति वा पाठः ।

## द्वात्रिंशः पटलः ।



अथ यन्त्रविरचनाभिर्म्मन्त्रविशेषान् बहुप्रकारयुतान् ।
कथयिष्ये मन्त्रविदामैहिकपारत्रिकाप्तये सुधियाम् ॥ १ ॥
त्रिगुणितसंज्ञे मायालङ्कृतकोणे तयाभिसंवीते च ।
या या विशेषक्लृप्तिस्तां तामपि संग्रहेण समभिदधे ॥ २ ॥
कोणोल्लसितसुधाचरगलदमृतस्फुरितवह्निपरिवीताम् ।
विन्दोर्म्मध्यगतबीजस्थितां सुधाधारया परिस्रुतया ॥ ३ ॥
पूर्णसुषुम्नारन्ध्रां साध्यतनुं संस्मरञ्छिरसि बध्यात् ।
तेनारोगी पुरुषः प्रज्ञावान् दीर्घमायुराप्नोति ॥ ४ ॥
शीतांशुमण्डलस्थं कूर्म्मचतुर्थान्तकोणलसितमिदम् ।
शीतप्रलिप्तजप्तं कथितं च शिरोरुजार्त्तिहरम् ॥ ५ ॥
तद्यन्त्रयुगं विलिखेदभिलषितसाध्यसाधकाख्ययुतम् ।
साध्यमधस्तात् कृत्वा बद्धात्र स्वपितु साधको नित्यम् ॥ ६ ॥
विधिनानेन तु सद्यः साध्योऽस्य वशे भवेदयत्नेन ।
तत्तु खनित्वागारे तत्रान्नं सिद्धमत्तु (१) वश्यकरम् ॥ ७ ॥
साध्याख्यां शक्तिवह्नौ नरहरिमपि रन्ध्रत्रये च त्रिशक्तौ
कर्म्मालिख्याथ लोष्टे सततगमपि संस्थाप्य जप्त्वा स्वशक्त्या ।
आगारे स्थापयित्वा नरमुदकनिधेश्चित्रपात्रे लिखित्वा
दीप्ताग्नौ तापयित्वा स्त्रियममलधियः सम्यगाकर्षयेयुः ॥ ८ ॥
त्रिगुणितविहिता विधयः षड्गुणिते च प्रयोजनीयाः स्युः ।
रक्षाकर्म्मणि विहितं तत्प्रायः प्रचुरमन्त्रयुक्ततया ॥ ९ ॥

---

(१) "सिद्धमाद्यः" इति पाठान्तरम् ।

पाशाष्टाक्षरवीतशक्तिदहनप्रोल्लासि साध्याह्वयं
शक्तिश्रीस्मरसंवृतं कुयुगरन्ध्रावद्धचिन्तामणि ।
इत्थं षड्गुणितं विलिख्य जपितं मन्त्री दधानोऽसक्त-
द्राज्ञां वामदृशां प्रियो भवति संग्रामे पुरे वा चिरम् ॥ १० ॥
चिन्तारत्नाश्रिताक्षितियुगमथ नृसिंहाहृतान्तःस्थवीजं
प्रादुः साध्याभिधानं वहिरपि लिपिभिः प्रानुलोमाभिवीतम् ।
क्ष्माविम्बद्वन्द्वरन्ध्रप्रचलितचतुरर्णं ग्रहोन्मादभूत-
व्याधिघ्नं यन्त्रमस्मिन् कृतकलशविधिर्गर्भरक्षादिकारी (१) ॥ ११ ॥
द्वादशगुणितेऽखिलसन्नृसिंहवीजं महेन्द्रपुरवीतम् ।
शीतालिप्तं पुरलघुधूपितमन्तःप्रवद्धकर्म्मयुतम् ॥ १२ ॥
चतसृषु दिक्षु निखन्यात् सीमाद्वारतोरणाधो वा ।
देशाभिगुप्तिरेषा गुप्ततमा सूरिभिः पुरा प्रोक्ता ॥ १३ ॥
अलदलनिशाकुशीतैर्मसृणोपदे (२) विलिख्य यन्त्रमिदम् ।
सेरस्थापनकर्म्म प्रतिजप्तं प्राङ्गणे खनेन्मन्त्री ॥ १४ ॥
तत्र विशन्ति न चौरा ग्रहकृत्याः स्वाग्निकेतरक्षा च ।
अश्माभिपातवारणमभिवृद्धिः सम्पदाभवेदचिरात् ॥ १५ ॥
तद्वद्घटार्गलाख्यं यन्त्रं नीले विलिख्य पट्टवरे ।
मोचकसाध्यप्रतिकृतिहृदये गुलिकां विधाय निःक्षिप्य ॥ १६ ॥
त्रिमधुरयुक्ते पात्रे विन्यस्याभ्यर्च्य गन्धपुष्पाद्यैः ।
वलिमपि विकिरेद्रात्रिषु सप्ताहादानयेद्वधूमिष्टाम् ॥ १७ ॥
तामेवाथ प्रतिकृतिमग्नौ किञ्चित् प्रतापयन् जप्यात् ।
शक्तिं पाशाङ्कुशमनुसाध्याह्वविदर्भितां समाहितधीः ॥ १८ ॥

(१) "गर्भरक्षाधिकारी" इति पाठान्तरम् ।
(२) "मसृणे पट्टे" "मसृणे पदे" वा इति पाठान्तरम् ।

विधिनामुना चिरात्वाहृविततधियमपि सुराङ्गनां मन्त्री ।
आकर्षयेन्निजवाञ्छाप्रदायिनीं मदनवाणविह्वलिताम् ॥ १९ ॥
यन्त्रं तदेव लाक्षातात्म्रावीतं निधाय कलशजले ।
जप्त्वा भानुसहस्रकमभिषिञ्चेद्रजतकाञ्चनाभ्याञ्च ॥ २० ॥
तद्वद्विधाय कलशं तद्यन्त्रं धारयेत् पुनर्नित्यम् ।
वाञ्छितसिद्धिं लभते भक्त्या प्रणमन्ति देवता अपि तम् ॥ २१ ॥
यन्त्रं तदेव मन्दिरभित्तावभिलिख्य पूजयेद्दिनशः ।
चौरादिभूतनागा अपि तं देशं न वीक्षितुं शक्ताः ॥ २२ ॥
आलिख्य वीरपट्टे यन्त्रमिदं स्वमस्तकार्पितं कृत्वा ।
युध्यन् प्रत्यर्थिनमपि हत्वा यात्यव्रणाङ्कितो योद्धा ॥ २३ ॥
गजमदविलिखितमेतद्यन्त्रं जप्तञ्च मस्तके न्यस्तम् ।
करिणीमपि मदयेत् द्राक् चण्डतरे का कथा करेणुवरे ॥ २४ ॥
बहुनेति भाषितेन किमेभ्यो मुख्यं न किमपि च यन्त्रेभ्यः ।
तस्मादमूनि सद्भिर्धार्य्याणि च विश्ववश्यमिच्छद्भिः ॥ २५ ॥
गजमृगमदकाश्मीरैर्मन्वितमः सुरभिरोचनायुक्तैः ।
विलिखेदलक्तकरसालुलितैर्यन्त्राणि सकलकार्य्यार्थी ॥ २६ ॥
राज्या पटुसंयुतया सपाशशक्त्यङ्कुशेन मन्त्रेण ।
स्वाद्दक्तयाभिजुह्वन् निश्युर्व्वीशांस्तथोर्व्वशीं वशयेत् ॥ २७ ॥
हृल्लेखाग्निस्थसाध्याह्वयमथ वह्निरां क्रों वृतं वह्निगेह-
द्वन्द्वास्त्रिस्वस्तिकाढ्यं प्रतिलिखतु दले यन्त्रकं नागवल्ल्याः ।
जप्त्वा शक्तिं तु पाशाङ्कुशलिपिसहितां तापयेद्दीपवह्नौ
नक्तं भक्त्या नताङ्गी स्मरशरविवशा प्रेमलोलाभियाति ॥ २८ ॥
शक्तिस्थं निजनाम वह्निभवनद्वन्द्वोदरे मान्मथं
वीजं साध्यविदर्भया परिवृतं शक्त्या वहिः पार्थिवम् ।
तत्कोणे स्मरमन्यपुष्टनयनप्रोत्थैः पुनः कण्टकै-
स्ताम्बूले लिखिताभिजप्तमदयेद्योषिन्मनोमोहनः ॥ २९ ॥

शक्त्यन्तःस्थितसाध्यनाम परितो बीजैश्चतुर्भिः समा-
वद्धं शक्तिमनोभवाङ्कुशलिपिप्रोम्भिः समावेष्टितम् ।
शाल्युत्थे प्रतिलिख्य पिष्टविकृते प्राणान् प्रतिष्ठाप्य च
त्रिस्वादौ परिभर्ज्य तत्समदतः साध्यो वशे तिष्ठति ॥ ३० ॥
सान्तं शिखीलवयुतं दहनांशसाध्यं मायांशसाधकमथाभिवृतं कलाभिः ।
साध्योल्लसद्विमुखशूलमिदन्तु भर्त्तुर्यन्त्राह्वयं नरनताङ्घ्रिवशीकरं स्यात् ॥ ३१ ॥
मृत्काराङ्गुलिकात्तया सकलकलासान्तर्व्वसायुक्तया
साध्यस्याङ्घ्रिरजोयुजा मृदुमृदा क्लृप्तस्य शक्तिं हृदि ।
रूपस्याभिविलिख्य तद्विवरके साध्यन्तदीरान् प्रति-
ष्ठाप्याजप्य निखन्य तत्र दिनशो मेहेच्चिरं वश्यकृत् ॥ ३२ ॥
वामाच्या: प्रतिलिख्य नाम निशया वामोरुदेशे निशा-
मध्ये वामकरेण संशितमतिः संछादयंस्तन्मनाः ।
पूर्व्वं रुद्रपदं ततश्च दयिते योगीश्वरिं त्विन्दुम-
न्मन्त्रं जप्यति चेदनङ्गविवशां सद्यः प्रियामानयेत् ॥ ३३ ॥
मायाहृदोरथान्ते ब्रह्मश्रीराजितेऽक्षरान् प्रोक्ता ।
राजयुतपूजितेऽर्णान् जये सविजये सगौरि गान्धारि ॥ ३४ ॥
त्रिभुवनवशङ्करीति च सर्व्वलोकान्तिके वशङ्करि च ।
सर्व्वस्त्रीपुरुषवशङ्करि सुदुघे वागक्षरान् प्रवीप्सय ततः ॥ ३५ ॥
मायाद्विठान्तिको मनुरेकाधिकषष्टिवर्णकः प्रोक्तः ।
ऋषिरस्याजो निवृच्छन्दो गौरी च देवता प्रोक्ता ॥ ३६ ॥
सचतुर्द्दशभिर्द्दशभिस्तथाष्टभिश्चाष्टभिस्तथा दशभिः ।
एकादशभिर्मन्त्राक्षरैः क्रमादुच्यते षडङ्गविधिः ॥ ३७ ॥
असकलशशिराजन्मौलिरावद्धपाशा-
ङ्कुशरुचिरकराब्जा बन्धुजीवारुणाङ्गी ।
अमरनिकरवन्द्या त्रीक्षणा शोणलेपां-
शुककुसुमयुता स्यात् सम्पदे पार्व्वती वः ॥ ३८ ॥

अयुतं प्रजपेज्जुहुयाद्घृतप्लुतैः पायसैर्द्दशांशेन ।
आराधयेत्तदङ्गैर्मातृभिराशाधिपैर्नियतमनाः ॥ ३९ ॥
तिलतण्डुलकैर्लोणैस्त्रिमधुरसिक्तैः फलैश्च मधुरतरैः ।
आज्यैररुणकुवलयैस्त्रिदिनं हवनक्रियाशु वश्यकरी ॥ ४० ॥
नित्यञ्चादित्यगतां देवीं प्रविचिन्त्य तन्मुखो जप्यात् ।
अष्टोत्तरशतमञ्जामादौ भुवनं वशीकरोत्यचिरात् ॥ ४१ ॥
वर्णादर्व्वाङ्मन्त्री प्रयोजयेत् साध्यनाम कर्म्मयुतम् ।
प्रजपेद्वा हवनविधौ वाञ्छितसिद्धिप्रदस्तथा मन्त्रः ॥ ४२ ॥
सताराराजमुख्यन्ते राजाभिमुखिवर्णकान् ।
आभाष्य वश्यमुखि च क्लीं श्रीं मारार्णकान् वदेत् ॥ ४३ ॥
वीप्स्य देवि महादेवि पदं देवाधिदेवि च ।
प्रोक्ता सर्व्वजनस्येति मुखं मम वशं वदेत् ॥ ४४ ॥
कुरु कुर्व्विति ठद्वन्द्वान्तिकं मन्त्रं समुद्धरेत् ।
सप्ताधिकैः सदशभिस्तथा त्रिंशद्भिरक्षरैः ॥ ४५ ॥
दशभिः सप्तभिश्चैव चतुर्भिः करणाक्षरैः ।
पञ्चभिः सप्तदशभिर्व्वर्णैरङ्गक्रिया मनोः ॥ ४६ ॥
ब्रह्म श्रीमन्त्रं संप्रोक्ता (१) प्रतिपत्तिरमुष्य च ।
मन्त्रस्य जपक्लृप्तिश्च तथा होमविधिः स्मृतः ॥ ४७ ॥
मन्त्री सर्व्वजनस्थाने कुर्य्यात् साध्याह्वयं मनोः ।
प्रजपे हवने वाथ तथा तर्पणकर्म्मणि ॥ ४८ ॥
देवीश्चाष्टशतं प्रसूनवदथ त्रिस्वादुयुक्तं हुनेत्
सप्ताहं भसितेन तेन विहितं पुण्ड्रादिकं वश्यकृत् ।
आज्यैस्तत्कृतहोमपातितसमाजप्तं घृतं प्राशयेत्
साध्यं निष्परिहारकञ्च तदिदं वश्यम्भवेद्देहिनाम् ॥ ४९ ॥

---

(१) "ब्रह्मश्रीमन्त्रसंप्रोक्ता" इति पाठान्तरम् ।

शक्तिं साध्यर्च्चदृक्प्रतिकृतिहृदि संलिख्य संस्थाप्य जीवं
जप्त्वाखन्याङ्गनस्मिन्विधिवदनलमाधाय पुष्पैर्जवायाः ।
देवीमन्त्रेण रात्रौ दशपरशतसंख्यैस्तु काचन्दनाक्तै-
र्हुत्वा तां सप्तरात्रं सरिति निखननादुत्तमं वश्यकर्म्म ॥ ५० ॥
अन्नं मह्यन्नं मे देह्यन्नाधिपतये ममेत्युक्त्वा ।
अन्नं प्रदापयेति च ठद्वयान्तोऽन्नप्रदायको मन्त्रः ॥ ५१ ॥
करणेन्द्रियरसधातुद्वयवर्णैरङ्गमस्य मन्त्रपदैः ।
दशयुतजपावधिरेष द्विसहस्रहुतश्च सर्पिरन्नाभ्याम् ॥ ५२ ॥
दुग्धाब्धौ रूप्यवप्रावृतकनकमयद्वीपवर्य्ये सुराढ्ये
कल्पद्रूद्यानकाधो मणिमयलसिते विष्टपस्याग्रभागे ।
आसीने भूश्रियौ वाञ्छितवसुनिचयं मन्त्रिणां संसृजन्त्यौ
मन्त्री संचिन्तयानो जपतु दिनमुखे सम्पदेऽन्नस्य मन्त्रम् ॥ ५३ ॥
नत्यादिभगवत्यन्ते माहेश्वरिपदं वदेत् ।
अन्नपूर्णेऽग्निजायान्तो मन्त्रोऽन्नप्रदसंज्ञकः ॥ ५४ ॥
मायाविहितषडङ्गो दिनमुखे जप्यश्च षोड़शसहस्रम् ।
प्रोक्तो जपावसाने सघृतैरन्नैर्दशांशको होमः ॥ ५५ ॥
रुद्रताण्डवविलोकनलोलां भद्रवक्त्रनयनां (१) भवकान्ताम् ।
अन्नदाननिरतां जननीं तां संस्मरन् जपतु चित्रदुकूलाम् ॥ ५६ ॥
वैश्रवणः पक्षाशः पिङ्गलविविधी तथैव वित्तेशः ।
सकुवेरः स्वाहान्ताः सव्याहृतयः समीरिता मन्त्राः ॥ ५७ ॥
वित्तेशस्यान्तराले दशवटसमिधः सर्पिषाक्ता विविक्ता
होतव्या द्रव्यसिद्ध्यै कनकघटकरण्डात्तदोस्तुन्दिलोऽसौ ।
हेमाभो रत्नदीप्तोदरकमलनिधिद्योतितो रत्नपीठे (२)
ध्येयो न्यग्रोधमूले हुतभुजि विदुषा वैश्वदेवावसाने ॥ ५८ ॥

---

(१) "भद्रवक्त्रनलिनाम्" इति पाठान्तरम् ।

(२) "हेमपीठे" इति पाठान्तरम् ।

मन्त्रैरेतैर्घृतयुतपायसहोमोऽपि मन्त्रिणां विहितः ।
लक्ष्म्यै सदृतैश्च तिलैर्बिल्वसमिद्धोमतस्तथैव फलम् ॥ ५९ ॥
भया तोयेन्दुयुक् सैव विविन्दुर्हंसताचरैः ।
वालिस्थयोनिर्नत्यन्तो वसुवर्णो मनुर्मतः ॥ ६० ॥
वसुसाहस्रजापश्च तावच्छतहुतो मतः ।
होमः सर्पिषतान्नेन वीजेनाङ्गक्रिया मता ॥ ६१ ॥
रत्नस्वर्णांशुकादीन्निजकरकमलाद्दक्षिणादाकिरन्तं
वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् ।
ध्यायन्नासीनमप्यापणभुवि शतसंख्यं सविंशत्कमित्वं
पीतापुष्पैर्घृताक्तैस्त्रिदिनमथ हुनेत् स्वर्णवस्त्रादिसिद्धैः ॥ ६२ ॥
वययोरन्तरास्त्वं मे देहि शुक्राचरा द्विठः ।
मन्त्रोऽयुतजपः सर्पिःसहस्रहवनक्रियः ॥ ६३ ॥
शुक्रास्ये शुक्लपुष्पैर्हुतभुजि गुणशः सप्तशोऽप्येकविंश-
द्वारं होतव्यमेषोऽप्यतिसितकुसुमालेपनो वामदोष्णा ।
वासोरत्नानि कार्त्तस्वरमपि सततं साधकाय प्रयच्छन्
ध्यातो व्याख्यानमुद्राकलितवरकरस्त्वापणालिन्दसंस्थः ॥ ६४ ॥
वान्तरस्थोऽद्विपो दण्डी वेदान्ते सौरिदाहकः ।
सायान्ते नतिरप्यष्टवर्णो वैयासिकोमनुः ॥ ६५ ॥
मुनिव्रातावीतं विमलधियमम्भोदरुचिर-
द्युतिं व्याख्यामुद्राकलनविलसद्दक्षिणकरम् ।
परं जानौ कृत्वा दृढकलितकक्षैकविवरं
समासीनं व्यासं स्मरत निरतं पुण्यचरितम् (१) ॥ ६६ ॥
प्रकृतिसहस्रजपोऽयं दशांशकृतपायसाज्यहवनविधिः ।
निरुपमकविताप्रज्ञाव्याख्याश्रीसम्पदावहो मन्त्रः ॥ ६७ ॥

---

(१) "पुण्यनिचयम्" इति पाठान्तरम् ।

करचरणमूलपार्श्वद्युनीहरेविन्दुदुंसरसनार्णाः ।
अलिकाद्यो वर्म्मास्त्रद्विठान्तिको मनुरयं ध्रुवादिः स्यात् ?॥ ६८ ॥
अयुतं प्रजपेच्च षट्सहस्राधिकमन्ते जुहुयाद्दशांशमानैः ।
तिलसर्षपतण्डुलैः सशालीहविराज्यैः सुसमेधिते कृशानौ ॥ ६९ ॥
उत्तुङ्गाद्रिः प्रचेता अपि दहनसमीरौ धराव्योमसंज्ञे
प्राक्प्रत्यग्दक्षसौम्यास्वध उपरि च दिक्षु प्रवद्धप्रभाः स्युः ।
तन्मध्यस्थान्विपक्षादिकहरिरदन्तीन्द्रनागान् सचौरान्
हन्त्येतैर्म्मन्त्रिमुख्यो मनुविहितवलव्याकुलान् (१) सद्य एव ॥ ७० ॥

निजरिपुमचलाद्यैस्तैः ससम्बाधवीतं
मनुविदथ हलीभ्यां रुद्धनिश्वासवेगम् ।
तदुपरिगतवीजैः साधुसंस्यूतवक्त्रं
दहतु सकवचास्त्रैर्द्दीप्तिभिः स्वेच्छयैव ॥ ७१ ॥

योनिर्व्वियत् सनेत्रं परमे वर्णास्तथाग्निगं मेदः ।
रक्तस्थटक् (२) द्विठान्तस्तारादोऽयं मनुर्द्दशार्णयुतः ॥ ७२ ॥
अयुतं जपेन्मनुमिमं सहस्रवारं हुनेत्तथाज्येन ।
ध्यातापि गिरिसुतेयं जगतीं विश्वां वशीकरोत्यनिशम् ॥ ७३ ॥
अश्वारूढा कराग्रे नवकनकमयीं वेत्रयष्टिं दधाना
दक्षेऽन्येनानयन्ती स्फुरिततनुलता पाशवद्धां स्वसाध्याम् ।
देवी नित्यं प्रसन्ना नवशशधरविम्वा त्रिनेत्राभिरामा
दद्यादाद्याऽनवद्यां प्रवरफलसुखप्राप्तिहृद्यां श्रियं वः ॥ ७४ ॥
विद्ययानुदिनहृद्ययाऽनया होमकर्म्म वरहेमदायि तत् ।
कामितां सपदि वामलोचनामानयेदपि च मारपीड़िताम् ॥ ७५ ॥
हवनक्रिया सपदि वश्यकरी मधुरावसेकपटुना पटुना ।
सदृशो न कश्चन जगत्यपरो मनुनामुनानयनकर्म्मविधौ ॥ ७६ ॥

---

(१) "मनुविहितवलव्याकुलान्" इति पाठान्तरम् ।
(२) "रक्तस्वटक्" इति पाठान्तरम् ।

वाणी स्यात्ताररूपा शिरसि गिरिसुता शक्तिरूपा ललाटे
रव्यग्न्यक्ष्णोस्तथात्मा (१) विधुरपि वदनावेष्टने टान्तरूपः (२)।
श्रोर्जिह्वायां स्वरूपाऽप्यभिमतकरिरूपौ स्वह्नौ दीर्घयुक्ता-
वेवं न्यासो मुखे श्रीविभवसुखयशःकान्तिमेधाकरः स्यात् ॥ ७७ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे द्वात्रिंशः पटलः ॥ * ॥

---

(१) "स्तथात्मम्" इत्यपि पाठो दृश्यते।
(२) "दान्तरूपः" इति पाठान्तरम्।

## त्रयस्त्रिंशः पटलः ।

अथ सन्तानसंसिद्धिसमाकुलितचेतसाम् ।
तदुत्पत्तिकरं योगं प्रवक्ष्ये गृहमेधिनाम् ॥ १ ॥
नचापुत्रस्य लोकोऽस्ति पितरोऽधः पतन्ति च ।
तस्मात्तु सकलोपायैर्यतेतापत्यसिद्धये ॥ २ ॥
देवर्षिपितृपूजासु विरतानामभक्तितः ।
गुरुमातृपितृश्राद्धवञ्चकानाञ्च नित्यशः ॥ ३ ॥
अर्थिभ्योऽर्थमदातॄणां (१) विद्यमानेऽर्थसञ्चये ।
अदत्त्वैवातिथिभ्योऽन्नं भोक्तॄणां पापचेतसाम् ॥ ४ ॥
हरिशङ्करयोः पादपद्मार्चारहितात्मनाम् ।
स्वभार्यानिन्दकानाञ्च लोकवेदविरोधिनाम् ॥ ५ ॥
इत्यादिदोषदुष्टानां पापानां गृहमेधिनाम् ।
दुष्प्रतिग्रहदोषाद्वा जायते त्वनपत्यता ॥ ६ ॥
एवमादिकदोषापनोदिनी सुतसिद्धिदा ।
अशेषपापहन्त्री च वक्ष्यते यजनक्रिया ॥ ७ ॥
पुत्राप्तये गृहस्थो दीक्षाविधिना चतुर्दशीरात्रिम् ।
सह पत्न्या गमयित्वा कृत्वा पौर्वाह्णिकीः क्रियाः सकलाः ॥ ८ ॥

संयोज्य किञ्चन यथाविधि पञ्चगव्यं
संकोचकेन मनुना प्रतिमथ्य वार्णम् ।
संमन्त्र्य चाष्टशतकं समवद्यभूत-
मन्त्रैः पिबेत् स्वयमसावपि गर्भधात्री ॥ ९ ॥

---

(१) "अर्थिभ्योऽन्नमदातॄणाम्" इति पाठान्तरम् ।

ततोऽग्निमाधाय चरुञ्च कृत्वा सङ्कल्प्य तद्दक्षिणमुत्तरञ्च ।
भागक्रमात् पैतृकदैविकं तत्प्रीत्यै तु पूर्व्वं जुहुयात् क्रमेण ॥ १० ॥
स्मृत्वा निजं पितरमप्यधरां निषण्णं सान्नाय्यपिण्डयुगलं घृतसंप्लुतं तत् ।
हुत्वा स्रुवेण घृतसंपुटितं तथैव मन्त्री पितामहमथ प्रपितामहञ्च ॥११॥
व्याहृतिभिरथ पञ्चहोमतः सर्व्वशः प्रतिजुहोतु सर्पिषा ।
मातृवर्गगुरुतत्पितृद्वयं पूर्व्ववत्समवदाय साधकः ॥ १२ ॥
कलायुतैः षोडशमूर्त्तिमन्त्रैर्व्यस्तैरथाष्टाक्षरजैश्च वर्णैः ।
अष्टौ समस्तेन च तेन पञ्चाक्षरेण चाष्टाक्षरवज्जुहोतु ॥ १३ ॥
पक्वाहुतीनामिति वर्णसंख्यं चतुर्गुणं वापि घृताहुतीनाम् ।
हुत्वावदानद्वितयञ्च पुंस्त्रीभेदप्रभिन्नं हविषा करोतु ॥ १४ ॥

पञ्चाक्षरेण पुरुषात्मकमन्यदष्ट-
वर्णेन चाष्टशतयुग्ममथ प्रजप्य ।
संयोज्य तद्युगलमप्यभिजप्य विष्णु
योन्यादिकेन मनुना च कपर्द्दिसंख्यम् ॥ १५ ॥

पुरुषः पुरुषात्मकं प्रकृत्यात्मकमन्याथ समाहितोपयुज्य ।
अवदानयुगं क्रमान्मनस्वी पुनराचम्य समर्चयेद्धुताशम् ॥ १६ ॥
गुरवेऽप्यथ दक्षिणां प्रदत्त्वाऽनलमुद्वास्य च भोजयेद्द्विजातीन् ।
प्रतिपर्व्वकमेवमेकवृद्ध्या मतिमान् वत्सरकं प्रपूरयीत ॥ १७ ॥
एकग्रासादन्यमब्दं द्विजातीन् संभोज्यान्नं पूरयेदेकवृद्ध्या ।
संपूर्य्यमाणादिवमेव विकाब्दादर्व्वाक् पुत्रो जायते दैवशक्त्या ॥ १८ ॥
पितृदेवताप्रसादान्मेधायुःकान्तिसंयुतो विद्वान् ।
लक्ष्मीतेजोयुक्तो धर्म्मरुचिर्भवति सन्ततेः कर्त्ता ॥ १९ ॥

समुनिसुरपितृभ्यो ब्रह्मचर्य्येण यज्ञै-
स्त्रिविधमृणमपत्यैश्चैव संमोचयेद्यः ।
श्रुतिवचनकृदस्मिन्वापि लोके परस्मि-
न्निति स तु गृहमेधी पूज्यते साधुलोकैः ॥ २० ॥

वर्गादिको हलोमन्तः सङ्कोचाख्यो ध्रुवादिकः ।
मन्त्रः स्याद्भूतमनवः स्युश्च भूतात्मनामभिः ॥ २१ ॥
अतो हिताय जगतां प्रथितं शिवचेतसाम् ।
अथ संक्षिप्य वक्ष्यामि लक्षणं गुरुशिष्ययोः ॥ २२ ॥
स्वच्छः स्वच्छन्दचरितोऽतुच्छधीस्त्यक्तहृच्छयः ।
देशकालादिविद्देशे देशे देशिक उच्यते ॥ २३ ॥
अग्रगण्यः समग्रज्ञो निग्रहानुग्रहे क्षमः ।
षड्वर्गविजयव्यग्रोऽनुग्रो विशदविग्रहः ॥ २४ ॥
शुक्लः शुक्लांशुकोऽक्लिष्टकर्म्माविक्लवमानसः ।
वेदवेदाङ्गविद्यादिवेदिता विदितागमः ॥ २५ ॥
इष्टदोऽनिष्टसंहर्त्ता दृष्टादृष्टसुखावहः ।
रतोऽविरतमर्चासु परं पुरसुरद्विषोः ॥ २६ ॥
दाता दान्तः शान्तमना नितान्तं कान्तविग्रहः ।
स्वदुःखकारणेनापि परं परसुखोद्यतः ॥ २७ ॥
ऊहापोहविदध्यात्मव्याकुलो मोहवर्ज्जितः (१) ।
अज्ञानुकम्पी विज्ञातज्ञानो ज्ञातपरेङ्गितः ॥ २८ ॥
निरंशः सांशवित् सर्व्वसंशयच्छिदसंशयः ।
नयविद्विनयोपेतो विनीतनीतिरात्मवान् ॥ २९ ॥
व्याधिरप्रापितव्याधिः समाधिविधिसंयुतः ।
श्रुतिशूरोऽतिधीरश्च वीरो वाक्यविशारदः ॥ ३० ॥
वर्णोपेतसमारम्भो गभीरो दम्भवर्ज्जितः ।
आदर्श इव विद्यानां न तु दर्शनदूषकः ॥ ३१ ॥
असौ मृग्यश्च दृश्यश्च सेव्यश्चाभीष्टमिच्छता (२) ।
शिष्यस्तदावर्ज्जनकहेतुना द्रविणेन च ॥ ३२ ॥

---

(१) "ऊहापोहादिविद्विद्वान् लोभमोहविवर्ज्जितः" इति पाठान्तरम् ।
(२) "असौ मृग्यश्च सेव्यश्च ज्ञेयश्चाभीष्टमिच्छता" इति पाठान्तरम् ।

तस्य पादारविन्दोत्थरज:पटलभूषण: (१) ।
ज्ञानमप्राप्य न प्राप्यं प्रायो बुद्धिमतेप्सितम् ॥ ३३ ॥
नित्यश: कायवाक्चित्तैस्त्रिद्वैरकाब्दाधिकावधि ।
परिचर्य्यापर: शिष्य: स्यात् सुसंयतमानस: ॥ ३४ ॥
तन्तथाविधमालक्ष्यं तथाऽवितथवादिनम् ।
मातृत: पितृत: शुद्धं बुद्धिमन्तमलोलुपम् ॥ ३५ ॥
अस्तेयवृत्तिमास्तिक्ययुक्तं मुक्तिकृतोद्यमम् ।
अकालङ्कं मृषा हीनमहीनद्रव्यमानसम्॥ ३६ ॥
ब्रह्मचर्य्यरतं नित्यं परिचर्य्यापरं गुरो: ।
अल्पाशनिद्रं पूजायामनल्पकृतकल्पनम् ॥ ३७ ॥
अधीतवेदं स्वाधीनमनाधिं व्याधिवर्ज्जितम् ।
तरुणं करुणावासं परितोषकरं गुरो: ॥ ३८ ॥
सुविषमेषणातीतममलं विमलाशयम् ।
सुप्रसन्नमसन्नाङ्गं सदा सन्निहितं गुरो: ॥ ३९ ॥
परोपकारनिरतं विरतं परदूषणे ।
मातृवद्गुरुपत्नीञ्च भ्रातृवत्तत्सुतानपि ॥ ४० ॥
स्मरन्तमस्मरावाधं स्मितोपेतमविस्मितम् ।
परिग्रहेत् परीक्ष्यैवं शिष्यमेवंगुणं गुरु: ॥ ४१ ॥
अलसं मलसंक्लिन्नं (२) क्लिष्टं कष्टान्ववायजम् ।
दम्भान्वितमगम्भीरं चण्डं पण्डितमानिनम् ॥ ४२ ॥
रागिणं रोगिणं भोगलालसं वालसम्मितम् ।
रौद्रं दरिद्रं निद्रालुमायूनं क्षुद्रचेष्टितम् ॥ ४३ ॥
नृशंसमन्धं वधिरं पङ्गुं व्यङ्गममङ्गलम् ।
अतिदीर्घमतिह्रस्वमतिस्थूलं कृशात्मकम् ॥ ४४ ॥

(१) "रज:पटलदूषण:" इति पाठान्तरम् ।
(२) "मलसंछन्नम्" इति पाठान्तरम् ।

[ आदित्सुं कुत्सितं वत्सं वीभत्सं मत्सरात्मकम् ] (१) ।
परदारपरं भीरुं दारुणं वैरिणं सताम् ॥ ४५ ॥
तुच्छं त्वलब्धवैराग्यं स्तब्धं (२) लुप्तकबान्धवम् ।
स्वादित्सुं कुत्सितं वीतवीभत्सं मत्सरात्मकम् ।
सुखिनं मुखरं दुष्टं दुर्मुखं मूर्खमानसम् ॥ ४६ ॥
प्रत्यग्रसुग्रं व्यग्रेहमग्रगण्यं दुरात्मनाम् ।
भ्रष्टव्रतं तमःस्पृष्टं क्लिष्टमिष्टापहं नृणाम् ॥ ४७ ॥
स्वार्थकृत्ये प्रसक्तार्थं निरर्थारम्भणं शठम् ।
ईदृग्विधं गुरुः शिष्यं न गृह्णीयात् कथञ्चन ॥ ४८ ॥
यदि गृह्णाति तद्दोषः प्रायो गुरुमपि स्पृशेत् ।
मन्त्रिदोषो यथा राज्ञि पत्यौ जायाकृतो यथा ॥ ४९ ॥
तथा शिष्यकृतो दोषो गुरुमेति न संशयः ।
स्नेहाद्वा लोभतो वापि योऽनुगृह्णाति (३) दीक्षया ॥ ५० ॥
तस्मिन् गुरौ सशिष्ये तु देवताशाप आपतेत् ।
मधुद्विषि महादेवे मातापित्रोर्महीभृति ॥ ५१ ॥
भक्तिं र्या सा पदाम्भोजे कार्य्या निजगुरोः सदा ।
छायाज्ञापादुकोपानहृण्डांश्च शयनासने ।
यानं मनोगतं चान्यदन्तेवासी न लङ्घयेत् ॥ ५२ ॥
व्याख्या (४) विवादं स्वातन्त्र्यं क्षामितां कामजृम्भिकाम् ।
निद्राकुतर्कक्रोधांश्च त्यजेद्गुरुगृहे सदा ॥ ५३ ॥
सग्राम्यधर्म्मविण्मूत्रोत्सर्गनिष्ठीवनादिकम् ।
परित्यजेत् परिज्ञाता वमिञ्च (५) गुरुमन्दिरे ॥ ५४ ॥

---

(१) चिह्नितांशोऽयं पुस्तकान्तरे दृश्यते ।
(२) "लुब्धं चालब्धवैदग्ध्यं दुःस्थम्" इति पाठान्तरम् ।
(३) "योऽनुगृह्णाति" इति पाठान्तरम् ।
(४) "व्याख्याम्" इति पाठान्तरम् । (५) "वमितम्" इति पाठान्तरम् ।

ग्राह्योक्तिमनृतं निद्रामृणञ्च क्रयविक्रयम् (१)
परित्याज्यं गुरौ तस्य सपत्नैश्च समागमम् ॥ ५५ ॥
इष्टं वानिष्टमादिष्टं गुरुणा यत्तु गुर्व्वपि ।
त्वरया परया कुर्य्यादुद्वा सम्यगजिह्मया ॥ ५६ ॥
कर्म्मणा मनसा वाचा सदा भक्तियुजा गुरुम् ।
निर्व्याजं पूजयेच्छिष्यो निजकार्य्यप्रसिद्धये ॥ ५७ ॥
लोकोद्वेगकरी या च या च मर्म्मनिकृन्तनी ।
स्थित्युच्छेदकरी (२) या च तां गिरं नैव भाषयेत् ॥ ५८ ॥
रम्यमप्युज्ज्वलमपि मनसोऽपि (३) समीहितम् ।
लोकविद्वेषणं वेशं न गृह्णीयात् कदाचन ॥ ५९ ॥
इत्याचारयुतः सम्यगाचार्य्यं यः समर्च्चयेत् ।
कृतकृत्यः स वै शिष्यः परत्रेह च नन्दति ॥ ६० ॥

देवानृषीनपि पितॄनतिथींस्तथाग्नी-
न्नित्योद्यतेन मनसा दिनशोऽर्च्चयेद्यः ।
इष्टानवाप्य सकलानिह भोगजातान्
प्रेत्य प्रयाति परमं पदमादिपुंसः ॥ ६१ ॥

इत्थं मूलप्रकृत्यक्षरविकृतिलिपिव्रातजातग्रहर्क्ष
चैत्राद्यावद्वभूतेन्द्रियगुणरविचन्द्राग्निसंप्रोतरूपैः ।
मन्त्रैस्तद्देवताभिर्म्मुनिभिरपि जपध्यानहोमार्च्चनाभि
स्तन्त्रेऽस्मिन् पञ्चभेदैरपि (४) कमलज ते दर्शितोऽयं प्रपञ्चः ॥ ६२ ॥

---

(१) "वस्तुविक्रयम्" इति पाठान्तरम् ।
(२) "स्थित्युद्वेगकरी" इति पाठान्तरम् ।
(३) "मनसापि" इति पाठान्तरम् ।
(४) "यन्त्रभेदैरपि" इति पाठान्तरम् ।

यदाश्रया विप्रकृतिस्वभावतो
विभिन्नताराादिसमुत्थितौजसः ।
जगन्ति पुष्णन्ति रवीन्दुवह्नयो
नमोऽस्तु तस्मै परिपूर्णतेजसे ॥ ६२ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे त्रयस्त्रिंशः पटलः ॥ * ॥

---

## चतुस्त्रिंशः पटलः ।

अथ लवणमनुं वदामि साङ्गं सजपं सप्रतिपत्तिकं सहोमं ।
विविधहितहितेन येन सर्व्वां जगतीमात्मवशे करोति मन्त्री ॥ १

लवणाम्भसि चेत्याद्या द्वितीया लवणेति च ।
दहेति च तृतीया स्यात् दग्धेति च चतुर्थ्यपि ॥ २ ॥
ऋक् पञ्चमी च या ते स्यादुयथा प्रोक्तमथर्व्वणि ।
ऋग्भिराभिस्तु पञ्चाङ्गं पञ्चभिर्व्वा समीरितम् ॥ ३ ॥
विद्याक्षरैः षड़ङ्गं वा प्रणवाद्यैर्निगद्यते ।
पञ्चभिश्च त्रिभिरपि पञ्चभिः करणाक्षरैः ।
सपञ्चभिर्युगार्णेन जातियुक्तैः समीरितम् ॥ ४ ॥
अङ्गिराः स्यादृषिश्छन्दोऽनुष्टुप् तद्देवता अपि (१) ।
अग्नीरात्रिस्तथा दुर्गा भद्रकाली समीरिता ॥ ५ ॥

अरुणोऽरुणपङ्कजसन्निभः स्रुवशक्तिवराभययुक्तकरः ।
अमितार्च्चिरजातगतिर्विलसन्नयनत्रितयोऽवतु वो दहनः ॥ ६ ॥
नीलतरांशुककेशकलापा नीलतनुर्निविड़स्तनभागा ( २ ) ।
साङ्कुशपाशसशूलकपाला यामवती भवतोऽवतु नित्यम् ॥ ७ ॥

करकमलविराजच्चक्रशङ्खासिशूला
परिलसितकिरीटा पातितानेकदैत्या ।
त्रिनयनलसिताङ्गी देवसिद्धादिपूज्या ( ३ )
पवनसखनिभाङ्गी पातु कात्यायनी वः ॥ ८ ॥

---

(१) "अनुष्टुप्त्रिष्टुप् च देवता" इति पाठान्तरम् ।

(२) "विपुलस्तनभारा" इति पाठान्तरम् ।

(३) "तिग्मरश्मिप्रकाशा" इति पाठान्तरम् ।

सुरौद्रसितदंष्ट्रिका त्रिनयनोर्द्ध्वकेशोल्वणा
कपालपरशूल्लसड्डमरुकत्रिशूलाकुला ।
घनाघननिभा रणद्रुचिरकिङ्किणीमालिका
भवद्विभवसिद्धये भवतु भद्रकाली चिरम् ॥ ९ ॥
अयुतं नियतो मन्त्रस्रक्पञ्चकसमन्वितम् (१) ।
प्रजपेत्त्रिसहस्रं वा सम्यगेनं समाहितः ॥ १० ॥
दशांशेन हुनेत्सिद्धै हविषा घृतसंयुजा ।
एवं कृते प्रयोगार्हो मन्त्री भूयान्नचान्यथा ॥ ११ ॥
वह्निरात्री वरे स्यातां वश्याकर्षणकर्म्मणोः ।
दुर्गाभद्रे ( २ ) तथा देव्यौ शस्ते मारणकर्म्मणि ॥ १२ ॥
आरभ्य कर्म्मकृन्मन्त्री तृतीयां कृष्णपक्षजाम् ।
संदीक्षितो भवेत्पूते ( ३ ) मन्दिरे मन्त्रजापवान् ॥ १३ ॥
निखन्यात्तत्र कुण्डञ्च दोर्म्मात्रं त्र्यस्रमेखलम् ।
चतुष्कं सुन्दराकारं पुत्तलीनाञ्च कारयेत् ॥ १४ ॥
एकां साध्यर्क्षवृक्षेण शालीपिष्टेन चापराम् ।
चक्रिहस्तमृदा चान्यां मधूच्छिष्टेन चापराम् ॥ १५ ॥
तासु हृद्देशलिखितसाध्याख्यासु समाहितः ।
सम्यक् संस्थापयेत् प्राणान् साध्यादानीय साधकः ॥ १६ ॥
उत्तानां दारवीं कुण्डे खनेन्मन्त्राभिमन्त्रिताम् ।
पिष्टजां विष्टरस्याधः पादस्थाने च मृण्मयीम् ॥ १७ ॥
लम्बयेदम्बरे सिक्थमयीमूर्द्ध्वमधोमुखीम् ।
पुनः कृष्णाष्टमीरात्रौ पूर्व्वयामे गते सति ॥ १८ ॥

---

(१) "नियतो मन्त्री मन्त्रस्रक्पञ्चकान्वितम्" इति पाठान्तरम् ।
(२) "दुर्गाकाल्यौ" इति पाठान्तरम् ।
(४) 'पूतः इति पाठान्तरम् ।

रक्तमाल्याम्बरो मन्त्री कृतरक्तानुलेपनः ।
सम्यक् कृतलिपिन्यासः प्राणायामादिकृच्छुचिः ॥ १९ ॥
कुड़वं पीतलवणं सुश्लक्ष्णं परिचूर्णितम् ।
दधिक्षीद्रघृतक्षीरैः प्रोक्षयित्वा सुशोधितम् ॥ २० ॥
आलोड्य गुड़मध्वाज्यैर्विसृष्टावयवामथ ।
तेन पुत्तलिकां मन्त्री चार्वङ्गीं कारयेद्बुधः ॥ २१ ॥
तस्याञ्च स्थापयेत्प्राणान् गुर्व्वादेशविधानतः ।
अष्टोर्द्ध्वशतसंख्यं वा तथाष्टोर्द्ध्वसहस्रकम् ॥ २२ ॥
ऋटक्पञ्चकं पञ्चविंशत्संख्यं प्रतिकृतिं स्पृशन् ।
जपित्वाङ्गानि विन्यस्येत् स्वाङ्गे प्रतिकृतावपि ॥ २३ ॥
सतारैश्चिटिमन्त्रार्णैश्चतुर्व्विंशतिसंख्यकैः ।
शिरोललाटदृक्कर्णनासास्यचिवुकेष्वपि ॥ २४ ॥
सकण्ठहृदयोरोजनाभिकुक्षिकटीषु च ।
मेढ्रपायूरुजान्वग्रजङ्घाङ्घ्रिषु च विन्यसेत् ॥ २५ ॥
अधोगुह्यादभेदः स्यादूर्द्ध्वं भेदो द्विके सति ।
आत्मन्येवं प्रविन्यस्य पुनः प्रतिकृतौ न्यसेत् ॥ २६ ॥
अङ्गुष्ठसन्धिप्रपदजङ्घाजानूरुपायुषु (१) ।
सलिङ्गनाभिजठरहृदयेषु स्तनद्वये ॥ २७ ॥
कन्धराचिवुकास्येषु घ्राणदृक्कर्णयुग्मके ।
ललाटशिरसोर्न्यस्येत् प्रतिमायाञ्च संघशः ॥ २८ ॥
उपलिप्तेऽथ कुण्डेऽन्तर्व्वह्निर्गोमयवारिणा ।
साध्यसंमुखमासीन आदध्याद्धव्यवाहनम् ॥ २९ ॥
प्रज्वाल्य साध्योडुतरुकाष्ठैरभ्यर्च्य दिक्क्रमात् ।
राजीकुशीतपुष्पाढ्यैश्चषके राजतादिके ॥ ३० ॥

(१) 'पायुषु' इत्यत्र "पत्सु च" इति पाठान्तरम् ।

देवतां प्रति पाद्यार्घ्यं दत्त्वा कार्य्यार्थसिद्धये ।
उपतिष्ठेद्धुतस्यादावन्ते मन्त्रैरितीरितैः ॥ ३१ ॥
त्वमाननममित्रघ्नं (१) निशाया हव्यवाहनः ।
हविषा मन्त्रदत्तेन तृप्तो भव तया सह ॥ ३२ ॥
जातवेदो महादेव तप्तजाम्बूनदप्रभ ।
स्वाहापते विश्वभच्च त्वयं दह शत्रुहन् ॥ ३३ ॥
ईशे शर्व्वरि सर्व्वाणि ग्रस्तं मुक्तं त्वया जगत् ।
महादेवि नमस्तुभ्यं वरदे कामदा भव ॥ ३३ ॥
तमोमयि महादेवि महादेवस्य सुव्रते ।
एषा मे पुरुषं हृत्वा वशमानय देहि मे (२) ॥ ३५ ॥
दुर्गे सर्गादिरहिते दुर्गसंरोधनार्गले ।
चक्रशङ्खधरे देवि दुष्टशत्रुभयङ्करि (३) ॥ ३६ ॥
नमस्ते दह शत्रुं मे वशमाय चण्डिके ।
शाकम्भरि महादेवि शरणं मे भवानघे ॥ ३७ ॥
भद्रकालि भवाभीष्टे भद्रसिद्धिप्रदायिनि ।
सपत्नान् मे हन हन दह शोषय तापय ( ४ ) ॥ ३८ ॥
शूलासिशक्तिवज्राद्यैरुत्कृत्योत्कृत्य मारय ।
महादेवि महाकालि रक्षास्मानक्षतात्मके ॥ ३९ ॥
पुनः प्रतिकृतेरङ्गसप्तकं निशितायसा ।
दक्षपादादिकं छित्त्वा पञ्चर्चं प्रजपेन्मनुम् ॥ ४० ॥
साध्यं संस्मृत्य सितधीर्जुहुयात् सप्तसंख्यया ।
दक्षिणं चरणं पूर्व्वं ततो दक्षार्द्धकं पुनः ॥ ४१ ॥

---

(१) 'देवाननममित्रघ्नः" इति पाठान्तरम् ।
(२) "देव्युमे" इति पाठान्तरम् ।
(३) "दुष्टसत्त्वभयङ्करि" इति पाठान्तरम् ।
(४) "पातय" इति पाठान्तरम् ।

दक्षहस्तं तृतीयं स्यान्नलादूर्द्ध्वं चतुर्थकम् ।
पञ्चमं वामहस्तं स्यात् षष्ठं वामार्द्धमेव च ॥ ४२ ॥
सप्तमं वामपादं स्यादन्यापि स्याद्भुतक्रिया ।
सप्तसप्तविभागो वा क्रमादङ्गेषु सप्तसु ॥ ४२ ॥
एकादशांशभिन्नैर्व्वा तदङ्गैः सप्तभिर्हुनेत् ।
होमोऽन्यथा वा पूर्व्वन्तु दक्षिणं चरणं भवेत् ॥ ४४ ॥
द्वितीयो दक्षिणकरस्तृतीयं शिर उच्यते ।
वामबाहु (१)श्चतुर्थन्तु मध्यादूर्द्ध्वन्तु पञ्चमम् ॥ ४५ ॥
अधोभागस्तु षष्ठः स्याद्वामपादस्तु सप्तमः ।
हुत्वैवं पूर्व्वसंप्रोक्तैरुपस्थाय च मन्त्रकैः ॥ ४६ ॥
अर्च्चयित्वा दण्डदीर्घं प्रणमेद्व्यवाहनम् ।
सुवर्णवस्त्रयुक्तां गां (२) शोणां दद्यात् सतर्णकाम् ॥ ४७ ॥
दक्षिणां सप्तकर्षन्तु दद्यान्मारणकर्म्मणि ।
अंशुकं रुचकं धान्यं दत्त्वा संप्रीणयेद्गुरुम् ॥ ४८ ॥
एवं कृतेन मन्त्रीष्टं लभते होमकर्म्मणा ।
अथवा मारणाकाङ्क्षी साध्यवामाङ्घ्रिपांशुभिः ॥ ४९ ॥
सनिम्बतिलसिद्धार्थव्रणकृत्तैलसंयुतैः ।
हिङ्गुत्रिकटुकोपेतैर्म्महिषीमूत्रविड्विषैः ॥ ५० ॥
वराहपारावतयोः पुरीषेण समन्वितैः ।
एतैर्व्विमिश्रयित्वा तु लोणं पूर्व्वोक्तसंख्यकम् ॥ ५१ ॥
पूर्व्ववत् पुत्तलीं तेन लोणचूर्णेन कारयेत् ।
प्राणान् प्रतिष्ठापयेच्च तत्र पूर्व्वोक्तसंख्यया ॥ ५२ ॥

---

(१) "वामपार्श्वः" इति पाठान्तरम् ।
(२) "सुवर्णाञ्च सयुक्तां गाम्" इति पाठान्तरम्

पूर्व्वोक्ताभिः पुत्तलीभिः कुण्डे दक्षिणदिङ्मुखः।
दुर्गां वा भद्रकालीं वा प्रणिपत्य यथोचितम्॥ ५३॥
उपस्थितेऽर्द्धरात्रे तु सव्यपाणिस्थशस्त्रकः।
वामपादं समारभ्य जुहुयात् पूर्व्वसंख्यया॥ ५४॥
समापयेद्दक्षपादे विकारेणायसे वशी (१)।
त्रिसप्ताहप्रयोगेण मारयेद्रिपुमात्मनः॥ ५५॥
तस्यां रात्र्यामुपोष्याथ परेऽहनि तु साधकः।
प्राणायामादिभिरपि गायत्रीजपहोमकैः।
विमुक्तपातको भूत्वा स पुनर्व्विहरेद्वशी॥ ५६॥
अथवा लवणैः परागभूतैर्म्मधुराक्तैः पुनरष्टमीनिशीथम्।
जुहुयाच्च चतुर्द्दशीनिशान्तं कुड़वोन्मितमेभिरेव मन्त्रैः॥ ५७॥
नारीं नरं वा नगरं नृपान् वा ग्रामान् द्विजान् वा मनसोऽनुरूपम्।
वशीकरोत्येव हुतक्रियेयं चिराय नैवात्र विचारणीयम्॥ ५८॥
इति लवणमनोर्व्विधानमेवं प्रणिगदितं विविधप्रभेदभिन्नम्।
विधिवदमुमादरेण संप्रयुञ्जन् व्रजति फलं निजवाञ्छितं चिराय॥५९॥
आकल्पयन्त्यपामार्गराजीष्टतहवींषि च।
पृथगष्टोत्तरशतावृत्त्या हुत्वा वलिं हरेत्॥ ६०॥
दशस्वाशासु दिवि च मन्त्रैरेतैर्यथाक्रमम्।
यो मे पूर्व्वगतः पाप्मा पावकेनेह कर्म्मणा॥ ६१॥
इन्द्रस्त्वं देवो राजा जम्भयतु स्तम्भयतु मोहयतु वशयतु मारयतु नाशयतु वलिं तस्मै प्रयच्छतु कृतं मम शुभं मम शिवं मम शान्ति स्वस्त्ययनं मम यो मेऽग्निगतः यो मे यमगतः यो मे निरृति गतः यो मे वरुणगतः यो मे वायुगतः यो मे सोमगतः यो मे ईशानगतः यो मे अधोगतः यो मे ऊर्द्ध्वगतः यो मे पातालगतः यो मे दिवि गतः

---

(१) "विकारेणायतो वशी" इति पाठान्तरम्।

पाप्मा पावकेनेह कर्म्मणा सूर्य्यस्त्वं देवो राजा जम्भयतु स्तम्भयतु मोहयतु मारयतु नाशयतु वलिं तस्मै प्रयच्छतु कृतं मम शुभं मम शिवं मम शान्तिस्वस्त्ययनं मम यो मे सर्व्वगतः ।

एवं दिशासु दशसु देवताभ्यो वलिं हरेत् ।
वलावेवं कृते शत्रोराशु कृत्या प्रणश्यति ॥

प्रणवयुगलग्लौभ्यां युगान्तं स्वकण्ठे शतञ्च तद्वत् स्वकुलिश संतिषामग्रे भुवो भ्रमति वासरपुरगं द्वारे द्वारे श्रङ्कुशमायया वलयितमञ्जे जम्भयलिखेत् कुरुते जड़म् ।

स्तम्भयस्तम्भयौ वीप्स्य तथा वन्धयमोहयौ ।
इत्यनन्तास्तथास्युस्ते जम्भाद्यष्टौ द्विठान्तिकाः ॥ ६२ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे चतुस्त्रिंशः पटलः ॥ * ॥

---

## पञ्चत्रिंशः पटलः ।



प्राणप्रतिष्ठानमनोर्विधानं प्रवक्ष्यते संप्रति सर्व्वसिद्धै ।
यस्मादृतेऽस्मिन् कथिताः प्रयोगा व्यर्था भवेयुर्गतजीवकल्पाः ॥ १ ॥
प्रोक्ता पूर्व्वममुष्य शब्दमथ च प्राणा इह प्राणका
स्तद्वज्जीव इह स्थितेति च तथा सर्व्वेन्द्रियाणीति च ।
तद्वद्वाङ्मनसी दृशं श्रुतिमथो घ्राणञ्च सप्राणकं
सेवेहागतयामयुक् सुखचिरे तिष्ठन्तु ठद्वन्द्वयुक् ॥ २ ॥
मन्त्रस्यास्य विधिर्हरिय हर इत्येते मुनिस्त्वे स्थिता-
श्छन्दश्चर्ग्यजुषं ससामकमथोऽतिच्छन्दसं वा भवेत् ।
स्रष्ट्री या जगतामनादिनिधना सर्व्वस्य चेष्टाकरी
प्राणाख्या प्रकृतिः क्रियामयवपुर्द्देवी परा देवता ॥ ३ ॥
प्रत्येकं कादिवर्गैः प्रतिगतलिपिभिर्विन्दुयुक्तैर्धराद्यैः
शब्दाद्यैः श्रोत्रमुख्यैर्व्वदनकरमुखैस्तत्क्रियाभिः क्रमेण ।
बुद्ध्याद्यैश्चात्मनोऽन्तैरुपरि च विलसज्जातिभिः षड्भिरेवं
कुर्य्यादङ्गानि सम्यग्विशदमतिरथो विश्वरूपत्वसिद्धै ॥ ४ ॥
नाभीदेशादापदं पाशवीजं हृद्देशादानाभिदेशञ्च शक्तिम् ।
आहृद्देशं मस्तकादङ्कुशाख्यं न्यस्वा यादीन् धातुषु न्यस्य सप्त ॥ ५॥
प्राणे जीवे चैव हंसद्वयार्णं न्यस्येन्मूलं व्यापकं मस्तकादि ।
एवं न्यस्य प्राणशक्तिस्वरूपां विश्वीं ध्यायेदात्मरूपाञ्च देवीम् ॥ ६॥
रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः (१)
पाशं कोदण्डमिक्षूद्भवमथगुणमप्यङ्कुशं पञ्चवाणान् ।

---

(१) "कराग्रैः" इति पाठान्तरम् ।

विभ्राणासृक्कपालं त्रिनयनलसितापीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा वः ॥ ७ ॥
ध्यात्वा देवीमेवं प्रजपेल्लक्षं मनुं समाहितधीः ।
आज्येनान्ते जुहुयाच्चरुणा वा तद्दशांशतो मन्त्री ॥ ८ ॥
शाक्ते पीठे देवीं षट्कोणस्थैः प्रजिशद्दरिरुद्रैः ।
वाणीलक्ष्मीगिरिजासहितैरङ्गैश्च मातृलोकेशैः ॥ ९ ॥
जपेच्चतुर्भिरेवं प्रतिवारैर्नित्यमेव मन्त्रितमः ।
[ एवं संसिद्धमनुर्वश्याद्यान्यारभेत कर्म्माणि ] (१) ॥ १० ॥
पाशाङ्कुशान्तरितशक्तिमनोः परस्तादुच्चार्य्य यादिवसुवर्णगणं सहंसं ।
पश्चादमुष्य पदमुख्यतमः प्रयोगं मन्त्रोऽयमित्यमुदितो(२) ग्रहसंख्यया वा ॥११॥
मृता वैवस्वता चैव जीवहा प्राणहा तथा ।
आकृष्या ग्रसना (३) चैव भ्रमदा (४) विस्फुलिङ्गिनी ॥ १२ ॥
चैतन्यप्रतिहन्त्रीति प्राणदूत्यश्च यादिकाः ।
बद्ध्वा साध्यं पाशबीजेन शक्त्या गृह्णन्नाकृष्याङ्कुशेनाथ यादीन् ।
दूतीश्चोक्त्वा साध्यनामाथ धातूनेवं मन्त्रो यावदात्मा सतीर्थ्यः ॥ १३ ॥
सुप्ताशेषजने निशीथसमये साध्ये स्वपित्यादरा
दारुह्य स्ववशं निधाय हृदये साध्याकृतेः कीटकम् ।
बद्ध्वा तच्च निपीड़मेव सहसा कालस्य यष्ट्याशिर-
स्याताद्य क्षुभिताखिलेन्द्रियगणं साध्यं स्मरेत् साधकः ॥ १४ ॥
वायव्याग्नेयैन्द्रवारीशमहेशक्रव्यात्सोमप्रेतराणमध्यगेषु ।
स्थानेष्वेतेष्वष्टयादीन् सहंसान् भृङ्गान् ध्यायेत् विन्दुतन्तुप्रवद्धान्(५) ॥१५॥

---

(१) चिह्नितांशोऽयं पुस्तकान्तरे न दृश्यते ।
(२) "पश्चादमुष्य पदमुच्चरतः प्रयोगं" इति पाठान्तरम् ।
(३) "ग्रथना" इति पाठान्तरम् ।
(४) "प्रमदा" इति पाठान्तरम् ।
(५) "स्त्रीयविन्दुप्रवन्धान्" इति पाठान्तरम् ।

स्वीयेऽप्येवं संस्मरेद्धृत्सरोजे भृङ्गीरूपान्निर्गतान् श्वासमार्गैः ।
साध्याङ्गस्थान् चञ्चरीकान् गृहीत्वा स्वीयं स्थानं पूर्व्ववत् संप्रविष्टः(१) ॥१६॥
बीजानि रक्तानि तु वश्यकर्म्मण्यम्भोधराभाण्यभिचारकाले ।
धूम्राणि विद्वेषविधौ सद्धोमे पीतानि संस्तम्भविधौ स्मरेच्च ॥ १७ ॥
अथवा साध्यप्राणान् मण्डूकाकारधारिणो ध्यायेत् ।
स्वीयान् भुजगाकारानभिचारादौ नृशंसकर्म्मविधौ ॥ १८ ॥
प्राणप्रतिष्ठाकर्म्मैवं विधायैकादशावरम् ।
पुत्तल्यादौ स्वचित्ते वा तांस्तु संस्तम्भयेद्ध्रुवा (२) ॥ १९ ॥
आकृष्टानां साध्यदेशादसूनां पुत्तल्यादावप्ययं स्यात्प्रकारः ।
किन्तु स्वीये हृत्सरोजे प्रवेशो वश्याकृष्ट्योरेव नात्राभिचारे ॥ २० ॥
पाशादित्रिकयुक्तमूलहृदयभ्रूमध्यसूत्रायिता (३)
साग्निः साध्यललाटरन्ध्रपथतोऽप्यामूलमाजग्मुषी ।
योन्यावात्महृदब्ज (४) मेवमनिशं भ्राम्यत्यसौ चिन्तिता
शक्तिर्जन्मशतान्यपीह वशयेत् साध्यं तथाकर्षयेत् ॥ २१ ॥
प्राणप्रतिष्ठाविधिरेवमुक्तः साङ्गः सयोगो विनियोगयुक्तः ।
अस्मिन् प्रवीणो गिरिकाननादीन् प्रचालयेत् किं पुनरात्मयुक्तान् ॥२२॥

॥ * ॥ इति श्रीप्रपञ्चसारे पञ्चत्रिंशः पटलः ॥ * ॥

---

(१) "संप्रवेश्यात्" इति पाठान्तरम् ।
(२) "ध्रुवम्" इति पाठान्तरम् ।
(३) "सूत्तापिता" इति पाठान्तरम् ।
(४) "योन्यावर्त्तहृदब्जम्" इति पाठान्तरम् ।

# षट्त्रिंशः पटलः ।

धर्म्मवित्तसुखमोक्षफलाप्ती योषितामपि नृणां प्रवरं यत् ।
मन्त्ररत्नमतिगुह्यमिदानीं वक्ष्यते मतिमतामपि रम्यम् ॥ १ ॥
दौर्भाग्यव्याधिदारिद्र्यजराशोकभयातुराः ।
भर्त्तृराजाभिभूताश्च स्त्रीविघ्नार्त्तास्तदीप्सवः ॥ २ ॥
पुत्रभृत्यार्थिनो युद्धजयकामान्यवञ्चिताः (१) ।
हृतार्थाः (२) क्लिष्टसंसारवश्यसंवननार्थिनः ॥ ३ ॥
बलिसिद्ध्यर्थिन (३) श्चैव अन्तर्द्धानाभिकाङ्क्षिणः ।
शत्रुभिः परिभूताश्च सर्व्वविघ्नैरुपद्रुताः ॥ ४ ॥
मारणोच्चाटनद्वेषस्तम्भाकर्षणकाङ्क्षिणः ।
भजेयुः सर्व्वथैवैनं मन्त्रं त्रैलोक्यमोहनम् ॥ ५ ॥
हृदयपुरुषोत्तमान्ते त्वप्रतिरूपेति चापि संभाष्य ।
लक्ष्मीनिवासपरतो जगदादौ सकल इत्युदाहृत्य ॥ ६ ॥
क्षोभय (४) सर्व्वपदान्ते स्त्रीहृदयविदारण (५) त्रिभुवनेति ।
समनोन्मादकरेति च सुरासुरान्ते वदेन्मनुजपदम् ॥ ७ ॥
भूयश्च सुन्दरीजनमनांस्यथो तापयादिकान् वीप्सं ।
तापय दीपय शोषय मारय भृगुकामिकालवान्ते तु (६) ॥ ८ ॥

---

(१) "जयकामान्यवाञ्छिताः" इति पाठान्तरम् ।

(२) "भूतार्त्ताः" इति पाठान्तरम् ।

(३) "फलसिद्ध्यर्थिनः" इति पाठान्तरम् ।

(४) "क्षोभण" इति पाठान्तरम् ।

(५) "रक्षोहृदयविदारण" इति पाठान्तरम् ।

(६) पुस्तकान्तरे "लवान्ते तु" इत्यस्यान्ते "मोहय" इत्यस्य प्राक् "निद्रां वालिनमाभाष्य ब्रूयादपि ततः परम्" इत्यधिकं श्लोकार्द्धं दृश्यते ।

मोहय (१) द्रावयेति च भूयश्चाकर्षयेत्युदीर्य्यान्तः ।
समस्त परमसुभगं (२) सर्व्वप्रदयोस्तु मध्यतः प्रवदेत् ॥ ९ ॥
सौभाग्यस्हष्टिवह्नीन् ससर्व्वादिकं कामशब्दञ्च ।
मन्त्री श्रीकण्ठाख्यं (३) सम्भवणं कं हनद्वयञ्च वदेत् ॥ १० ॥
चक्रेण वाथ गदया खड्गेन च सर्व्ववाणैश्च ।
भिन्दद्वयञ्च पाशेनान्ते घट्टयद्वयं समाभाष्य ॥ ११ ॥
भूयोऽङ्कुशेन ताड़य तुरुयुग्मकञ्च किञ्च प्रवदेत् ।
तिष्ठसि तावद्यावत् समीहितं मे समाभाष्य ॥ १२ ॥
सिद्धं भवतु च हुंफट् नमोऽन्तिकं मन्त्रमुद्धरेन्मन्त्री ।
मन्मथबीजोपेतं ताराद्यं सर्व्वसिद्धिदं भवति ॥ १३ ॥
मन्त्रपदानि द्वादश विद्यादाज्ञापदानि तावन्ति ।
सम्बुद्धन्ता हुंफट् नमोऽन्विताश्चेमे मन्त्राः स्युः (४) ॥ १४ ॥
मध्यत्वान्ते च परे गदिता मुनिभिर्मनोरमुष्य पुनः ।
ऋषिस्तु जैमिनिः प्रोक्तश्छन्दश्च जगतीष्यते ॥ १५ ॥
सर्व्वलोकशरण्योऽसौ देवता पुरुषोत्तमः ।
पुरुषोत्तमत्रिभुवनमनोन्मादकरेति च ॥ १६ ॥
हृदयं सकलान्ते च जगत्क्षोभण इत्यपि ।
सलक्ष्मीदयितेत्येवं शिरोमन्त्र उदाहृतः ॥ १७ ॥
मन्मथोत्तमशब्दान्ते अङ्गजे कामदीपिनि ।
शिखा तु भगशब्दन्तु परमाद्यन्तदन्ततः ॥ १८
शर्व्वसौभाग्य इत्यन्ते करभप्रतिरूपकम् (५) ।
केशवस्मरवर्णान्ते जातिश्च कवचं विदुः ॥ १९ ॥

---

(१) "भयञ्च" इति पाठान्तरम् । (२) "परमशुभान्ते रं वान्तम्" इत्यपि पाठः कुत्रचिद्दृश्यते ।
(३) "तन्द्री श्रीकण्ठाद्यांसम्भवणकम्" इति पाठान्तरम् ।
(४) "सम्बुद्धन्ता हुंफट् पदान्विताश्चैवं मन्त्राः स्युः" इति पाठान्तरम् ।
(५) "करभप्रतिरूपके" इति पाठान्तरम् ।

सुरासुरहृदययोर्म्मध्ये मनुजसुन्दरी ।
विदारणपदं तस्मात् सर्व्वप्रहरणेति च ॥ २० ॥
धरसर्व्वपदान्ते तु कामिकं हनयुग्मकम् ।
हृदयान्ते वन्धनानीत्यथाकर्षयवीप्सयेत् ॥ २१ ॥
ततो महावलेत्येतदस्त्रमन्त्रमुदीरितम् ।
त्रिभुवनेश्वरसर्व्वान्ते जनेत्युक्त्वा मनांसि च ॥ २२ ॥
हनदारययोर्युग्मं पृथङ्मे वशमानय ।
नेत्रं तारादिकाः सर्व्वे हुंफड़ान्ता नमोऽन्तिकाः ॥ २३ ॥
त्रैलोक्यमोहनान्ते तु हृषीकेश प्रतीति च ।
रूपमन्मथ सर्व्वस्त्रीहृदयाकर्षणेति च ॥ २४ ॥
आगच्छागच्छ च नमो मन्त्रः स्यादृशापकाह्वयः ।
आवाहादिविसर्गान्तेषूक्तोऽयं चापि सूरिभिः ॥ २५ ॥
सुदर्शन (१) महाचक्रराजेत्युक्त्वा धमद्वयम् ।
सर्व्वदुष्टभयान्ते तु कुरुच्छिन्दयुगन्ततः ॥ २६ ॥
विदारयद्वयान्ते तु परमन्त्रान् (२) ग्रस ग्रस ।
भक्षयद्वयभूतानि त्रासयद्वयवर्म्मफट् (३) ॥ २७ ॥
चक्राय नमइत्येष चक्रमन्त्रः प्रकीर्त्तितः ।
शङ्खमन्त्रो जलचराय स्वाहेति परिकीर्त्तितः ॥ २८ ॥
कौमोदकि महान्ते तु वले सर्व्वासुरान्तकि ।
प्रसीद हुंफट् स्वाहेति गदामन्त्र उदाहृतः ॥ २९ ॥
सम्वर्त्तकान्ते मुसल पोथयद्वितयं ततः ।
हुंफट् स्वाहा मौसलकः शार्ङ्गाय सशराय च ॥ ३० ॥

(१) "सुदर्शन" इति पाठान्तरम् ।
(२) "परयन्त्रान्" इति पाठान्तरम् ।
(३) "भक्षय त्रासयद्वयं वीप्सन्न हुंफट् पदान्तिकः" इति पाठान्तरम् ।

[ अति विह्वलं स्मरस्य शरैरतिरुचिरा ।
अङ्कुशाद्यं कुन्दयुगं अङ्कुशस्य समीरितः ] (१) ॥ ३१ ॥
सानन्तंलोहितवक्री वन्ध्याकर्षयवीप्सकी ।
वह्निजाया च पाशस्य स्वमुद्राभिर्न्यसेदिमान् ॥ ३२ ॥
स्वाहान्तः पक्षिराजाय तस्य मन्त्रः प्रकीर्त्तितः ।
त्रैलोक्यमोहनायान्ते विद्महे तु समुच्चरन् ॥ ३३ ॥
स्मराय धीमहीत्युक्त्वा तन्नो विष्णुः प्रचोदयात् ।
गायत्र्येषा तयार्च्चासु स्थानद्रव्याणि शोधयेत् ॥ ३४ ॥
व्यस्तैर्द्वादशभिर्म्मन्त्रैर्नमोऽन्तैश्चार्चते हरिः ।
भृगुः सविन्दुः खड्गीशो देव्या मन्त्र उदाहृतः ।
सूक्ष्मामर महासेन क्लीवहीनैः स्वरैरसौ ।
लक्ष्म्यादीनान्तु शक्तीनां मन्त्राः पूजाविधौ स्मृताः ॥ ३५ ॥
उद्यदिनेन्दुपयोदभ्रमरपिकारावकुसुमसौरभ्ये ।
सुमनोहरे च कल्पकवृक्षोद्याने रमापतिं ध्यायेत् ॥ ३६ ॥
अरुणारविन्दकर्णिकामध्यगगरुड़ोपरि स्थितं देवम् ।
उद्यद्दिनकरकोटिप्रतिमं सिन्दूरनवजवाकान्तिम् ॥ ३७ ॥
दरचापमुसलपाशान् चक्रासिगदाङ्कुशान् भुजैर्दधानम् ।
अतिहृद्ययौवनोन्मुखसौन्दर्य्यातिशयसाम्यनिर्मुक्तम् ॥ ३८ ॥
औदार्य्यकान्तिसौरभलावण्यसुधारसैर्जगत् सकलम् ।
सिञ्चन्तमिव समस्तानुग्रहिणं श्रीमुखाब्जसक्तसुदृशम् ॥ ३९ ॥
वामोरुजङ्घगतयालिङ्गितदेहं श्रिया मदोत्कटया ।
तद्वक्त्राम्बुरुहासवपिपासितभ्रान्तनेत्रषट्पदया ॥ ४० ॥

---

(१) पुस्तकान्तरे चिह्नितश्लोकस्थले एवंविधः पाठो दृश्यते ।
यथा—"शार्ङ्गस्य खड्गतीक्ष्णान्ते छिन्दयुक् खड्गमन्त्रकः ।
अङ्कुशाद्यं खड्गयुग्मं चाङ्कुशस्य समीरितः" ॥

रोमाञ्चहर्षनिर्गतजलमुक्तालङ्कृताङ्ग्या सततम् ।
वामकरस्थाम्बुजया प्रतप्तकनकाभयातिसुन्दरया ॥ ४१ ॥
अनुपमसौन्दर्य्येण च सर्व्वाभरणैरुपेतयातिमुदा ।
विष्वग्बहुप्रकारानेकैः सपरिच्छदैश्च देवगणैः ॥ ४२ ॥
गन्धर्व्वदैत्यरक्षोयक्षपन्नगैर्म्मुनीन्द्रैश्च ।
संसेवितं पुरन्ध्रीवृन्दैश्चानङ्गवाणसन्तप्तैः ॥ ४३ ॥
भावहाव (१) मधुरस्मितवक्त्रप्रेक्षणस्खलितभाषणजातैः ।
स्रष्टकाञ्चजघनस्तनभारैः स्रस्तवस्त्रचिकुरैः (२) र्म्मदलोलैः ॥ ४४ ॥

चरितमदनवारिस्वेदकन्नैर्विवस्त्रै-
र्मदनविगतलज्जैः स्पन्दमानाधरौष्ठैः ।
मृदुतरकरपद्माक्कृष्टनत्यञ्चलीकैः
शिरसि मुषितधैर्य्यैः कम्पिताशेषगात्रैः ॥ ४५ ॥
ज्वरार्त्तैः श्वसद्भिः पतद्भिः शरीरैः
शरैर्द्दारितैर्म्मन्मथस्यातिघोरैः ।
समाप्यायितैस्तस्य लावण्यदृष्ट्या
समुत्थाय विष्णोस्तमेवाभियातैः ॥ ४६ ॥

करतलकल्पितकोकनदैस्तत्पदयुगलं च पुनः परिपूज्य ।
नयनजलैः सगद्गदवाक्यैर्भव परमेश्वर पतिः (३) शरणं नः ॥ ४७ ॥
इत्थं संप्रार्थितं तं सकलसुरवरस्त्रीसहस्रैरजस्रं
दिव्यैर्भोगार्थिभिश्चाप्यखिलमुनिवरैर्भक्तितो मुक्तिकामैः ।
ध्यात्वा लक्षार्द्धसंख्यं जपतु मनुमिमं प्राप्तदीक्षोऽभिषिक्तो
द्रव्यैरेतैश्च जुह्वन् भवति मनुवरस्याधिकारी क्रियासु ॥ ४८ ॥

---

(१) "भावगर्भ" इति पाठान्तरम् ।
(२) "स्रस्तवस्त्रकुसुमैः" इति पाठान्तरम् ।
(३) "परमेश्वर गतिः" इति पाठान्तरम् ।

शतं दधि घृतं पयः पृथगथायुतं साज्यहविषा
शृतेन पयसा हुनेद्द्रविमितं तथा साक्षततिलैः ।
तथा दशशतोन्मितं त्रिमधुभिर्वरैश्चार्त्तवफलैः
पलाशसमिधां शतं समभितोषयेत् स्वं गुरुम् ॥ ४९ ॥
ततो लक्षत्रयं जप्त्वा कुण्डे चार्द्धेन्दुसन्निभे ।
हुनेदम्भोरुहैर्जातिकुसुमैश्च यवैरपि ।
दशांशं वैष्णवे वह्नौ ब्राह्मणांश्चैव तोषयेत् (१) ॥ ५० ॥
अम्भोधाराः सदा भिन्ने सेतौ संसिद्धयोऽखिलाः ।
यथाम्भोनिधिमायान्ति तथा यान्ति निरन्तरम् ॥ ५१ ॥
मन्त्रिणः कृतकृत्यत्वं काङ्क्षमाणाः पुनः पुनः ।
पीठे तु वैष्णवे नित्यं पूजयेत् पुरुषोत्तमम् ॥ ५२ ॥
अङ्गानि कर्णिकायामग्न्यादिदलेषु चाष्ट लक्ष्म्याद्याः ।
ताश्च स्युर्लसत्प्रीतिकाख्वचाद्याः (२) सुदर्शने ज्ञेयाः ॥ ५३ ॥
दरचक्रगदामुसलाः पूर्व्वाद्याशासु चाग्नकोणेषु ।
वज्राद्दिषु (३) शार्ङ्गखड्गाङ्कुशपाशा दिशाधिपाः पूज्याः ॥ ५४ ॥
अङ्गानि देववर्म्माणि (४) मदविवशाः शक्तयोऽष्ट लक्ष्म्याद्याः ।
चामरहस्ताः सर्व्वाः स्वलङ्कृताश्चाथ सुन्दर्य्यः ॥ ५५ ॥
योऽर्च्चयेत् सकृदप्येवं पुरुषः पुरुषोत्तमम् ।
प्राप्य राज्येप्सितां लक्ष्मीं प्राप्नोत्यमरवन्दिताम् ॥ ५६ ॥
दुर्भगो वसुसहस्रहुतेन स्यादतीव सुभगश्च मनोज्ञः ।
दीप्तिमत्प्रभवतैलवरेण व्याधिमोचणपरस्तु तथैव ॥ ५७ ॥

---

(१) "भोजयेत्" इति पाठान्तरम् ।
(२) "ताश्च स्युर्लसत्प्रीकीका तु पुाद्याः" इत्यपि पाठो दृश्यते ।
(३) "पद्मादिषु" इत्यपि पाठः पुस्तकान्तरे दृश्यते ।
(४) "देववर्णानि" इति पाठान्तरम् ।

श्रीफलैः प्रजुहुयात्कमलैर्व्वा किञ्चनोऽपि रविसहस्रमतोऽसौ ।
स्याद्धनाधिपसमोऽयुतसंख्यं जप्तुराधिरुपयाति विनाशम् ॥ ५८ ॥
यां प्रमदामभिकाङ्क्षति तस्या नामयुतं प्रजपेन्मनुमेतम् ।
पञ्चमहर्व्वदनेऽष्टसहस्रं (१) सा वशमेति न तत्र विचारः ॥ ५९ ॥
हयारिकुसुमैर्हरिं समभिपूज्य चाष्टोत्तरं
सहस्रमपि जुह्वतः शशिभवप्रसूनैः शुभैः ।
भवन्त्यवशगा नृपास्त्रिदशभिर्दिनैः किङ्कराः
परैर्हृतधनस्तथा कटुभवेन तैलेन वा ॥ ६० ॥
समिद्भिरथ बोधिजैर्द्दशशतं तथाष्टोत्तरं
त्रिमासमथवा जपेद्दशशतं तथा नित्यशः ।
स एव पुनरेत्य तद्दसु समाहृतं मन्त्रिणं
प्रणम्य पुनरर्पयेत्समभितोष्य चोपायनैः ॥ ६१ ॥
राजीश्चाष्टोत्तरशतं जप्त्वा शत्रुगृहे खनेत् ।
हयारिकुसुमं वापि पचे शुक्लेऽसिते क्रमात् ॥ ६२ ॥
शुक्लं रक्तं वेष्टितञ्च केशैश्चाटनकद्रिपोः ।
नित्यं नेत्रसमिद्भिस्तु चाष्टोत्तरसहस्रकम् ॥ ६३ ॥
षण्मासन्तु ततस्तेजोवत्यास्तैलं सहस्रकम् ।
जुह्वतो म्रियते शत्रुर्द्दृष्टा मासचतुष्टयात् ॥ ६४ ॥
अनेन विधिना वाथ स्तम्भनं स्यात्तथैव च ।
तथैवाज्याक्तदूर्व्वाणां होमतो मुच्यते भयात् ॥ ६५ ॥
पयोव्रतार्चाजपतत्परश्च त्रिमासमह्नोलघ्टतं सहस्रम् ।
नित्यं हुनेच्चैव ततस्त्रिमासे पूर्णे हुताशेऽपि च ह्यमाने ॥ ६६ ॥
प्राप्ते च मध्ये दिवसस्य वह्नेः पार्श्वे शशाङ्कप्रतिमा सुदीप्ता ।
संदृश्यते वै गुलिका सभानुः सहस्रमष्टोत्तरमेव मन्त्रम् ॥ ६७ ॥

---

(१) "पञ्चमहर्व्वदने तु सहस्रम्" इति पाठान्तरम् ।

प्रतिमन्त्र च तां वहतो गुलिकाममरैरपि दर्शनमस्य भवेत् ।
इह सिद्धिरथास्य भवत्यखिला वड़वामुखपुष्करयानमुखा ॥ ६८ ॥
इति सिद्धमुनीन्द्रयच्चविद्याधरगन्धर्व्वसमहाप्सरोरगाद्यैः ।
प्रतिसेवितमुत्तमं विधानं गदितं तत् पुरुषोत्तमस्य विष्णोः ॥ ६९ ॥

इति जपहुतपूजाध्यानकैः श्रीधरं यो
भजति (१) स तु समग्रां सम्पदैश्वर्य्यलक्ष्मीम् ।
अधरकृतविपच्चां (२) प्राप्य लोकैकवन्द्यो
व्रजति पदमनन्तं लोकवन्द्यस्य विष्णोः ॥ ७० ॥

॥ * ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यशङ्कराचार्य्यविरचिते
श्रीप्रपञ्चसारे षट्त्रिंशः पटलः ॥ * ॥

---

समाप्तोऽयं प्रपञ्चसारः ।

---

(१) "यजति" इति पाठान्तरम् ।
(२) "स च युवतिसपुत्राम्" इति पाठान्तरम् ।

# सूचीपत्रम् ।

## प्रथमपटले ।



## द्वितीयपटले ।



## तृतीयपटले ।

## चतुर्थपटले ।



## पञ्चमपटले ।

दशमपटले।



एकादशपटले।



द्वादशपटले।

## त्रयोदशपटले ।



## चतुर्द्दशपटले ।

## पञ्चदशपटले ।



## षोड़शपटले ।



## सप्तदशपटले ।

## अष्टादशपटले ।



## एकोनविंशपटले ।

" स्वप्नः,
" सुषुप्तिः,
" तुरीयम्,
" तुरीयातीतम्,
प्रकारान्तरयोगः,

## विंशपटले ।

नारायणाष्टाक्षरमन्त्रोद्धारः,
मन्त्राक्षराणां प्रत्येकाक्षरार्थः,
अस्य मन्त्रस्य ध्यानम्,
स्वदेहे मन्त्रवर्णानां न्यासनियमः,
किरीटादिमन्त्रोद्धारः,
संक्षेपतो दीक्षाविधानम्,
अस्य पुरश्चरणं द्वात्रिंशल्लक्षजपः,
तदर्द्धसंख्यकजपो वा,
अक्षमालया अङ्गुलिभिर्व्वा जपः कार्य्यः,
पूजायाश्चातुर्व्विध्यम्,

## एकविंशपटले ।

मेषादिद्वादशराशीनां द्वादश यन्त्राणि तत्तद्विहितकर्म्माणि च,
द्वादशराशिषु पूजितदेवतानां प्रीत्यर्थं श्रीहरिस्तवः,

## द्वाविंशपटले ।

वासुदेवस्य द्वादशाक्षरमन्त्रोद्धारः,
मन्त्रन्यासक्रमेण संहारस्थिति सृष्टयः,
अस्य त्रैविध्यकरणे दोषादीनां विनाशः,
श्रीहरिध्यानम्,
अस्य पुरश्चरणं पञ्चाशल्लक्षजपः,
अस्य होमविधानम्,
सुदर्शनमन्त्रोद्धारः,
अनेन दिग्बन्धनम्,
अग्निप्राकारकल्पनामन्त्रः,
सुदर्शनध्यानम्,
सुदर्शनगायत्री,
सुदर्शनस्य रक्षाकरमन्त्रोद्धारः,
सुदर्शनयन्त्रम्,
सुदर्शनपूजामन्त्रः,
पूजान्ते द्वादशाक्षरमन्त्रस्य द्वादशलक्ष-जपः,
पूजायन्त्रम्,
होमद्रव्याणि,
वलिमन्त्रोद्धारः,
होमीयद्रव्यभेदेन फलभेदः,

## त्रयोविंशपटले ।

श्रीकरनामाष्टाक्षरमन्त्रोद्धारः,
अस्य मन्त्रस्य ध्यानम्,
अस्य पुरश्चरणं अष्टलक्षजपः,

## चतुर्व्विंशपटले ।



## पञ्चविंशपटले ।



## षड्विंशपटले ।

## सप्तविंशपटले ।



## अष्टाविंशपटले ।



## एकोनत्रिंशपटले ।

## त्रयस्त्रिंशपटले ।



## चतुस्त्रिंशपटले ।



## पञ्चत्रिंशपटले ।



## षट्त्रिंशपटले ।

सूचीपत्रं सम्पूर्णम् ।

---

